॥ श्रीगणेशाय नमः ॥ ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १ ॥ श्रीसूत उवाच ॥ अतः
परं प्रवक्ष्यामि प्रयागस्योपवर्णनम् ॥ मार्कंडेयेन कथितं यत्पुरा पांडुसूनवे ॥ १ ॥ भारते तु यदा वृत्ते प्राप्तराज्ये पृथासुते ॥ एतस्मिन्नंतरे
राजा कुंतीपुत्रो युधिष्ठिरः ॥ २ ॥ भ्रातृशोकेन संतप्तश्चिंतयन् स पुनः पुनः ॥ आसीत्सुयोधनो राजा एकादशचमूपतिः ॥ ३ ॥ अस्मान्
संपीड्य बहुशः सर्वे ते निधनं गताः ॥ वासुदेवं समाश्रित्य पंच शेषास्तु पांडवाः ॥ ४ ॥ कथं भीष्मश्च द्रोणश्च कर्णश्चैव महामनाः ॥
सुयोधनश्च राजासौ पुत्रभ्रातृसमावृतः ॥ ५ ॥ राजानश्चैव निहताः सर्वे ये शूरमानिनः ॥ किं नो राज्येन कर्तव्यं भोगैर्वा जीवितेन वा ॥ ६ ॥
धिक्कष्टमिति संचिंत्य राजा विक्लवतां गतः ॥ निश्चेष्टो वै निरुत्साहस्तूष्णीमासीदवाङ्मुखः ॥ ७ ॥ लब्धसंज्ञः पुनर्भूपश्चिंतयानः पुनः पुनः ॥
कतरो विधियोगो वा नियमस्तीर्थमेव वा ॥ ८ ॥ येनाहं शीघ्रमामुच्ये महापातकसंचयात् ॥ यत्र स्नात्वा नरो याति विष्णुलोकम
नुत्तमम् ॥ ९ ॥ कथं पृच्छामि वै कृष्णं येनेदं कारितोस्म्यहम् ॥ धृतराष्ट्रं कथं पृच्छे तस्य पुत्रशतं हतम् ॥ १० ॥ एवं वैक्लव्यमापन्नो
धर्मराजो युधिष्ठिरः ॥ रुदंति पांडवाः सर्वे भ्रातृशोकपरिप्लुताः ॥ ११ ॥ ये च तत्र महात्मानः समेताः पांडवाश्रिताः ॥ कुंती च
द्रौपदी चैव ये च तत्र समागताः ॥ १२ ॥ भूमौ निपतिताः सर्वे क्रंदमाना इतस्ततः ॥ वाराणस्यां मार्कंडेयेन तेन ज्ञातो
युधिष्ठिरः ॥ १३ ॥ यथा वैक्लव्यमापन्नो रुदमानः सुदुःखितः ॥ अचिरेणैव कालेन मार्कंडेयो महातपाः ॥ १४ ॥ हस्तिनापुरे तु
संप्राप्तो राजद्वारे स तिष्ठति ॥ द्वारपालोपि तं दृष्ट्वा राज्ञः कथितवान्मुदा ॥ १५ ॥ त्वं यष्टुकामो मार्कंडो द्वारि तिष्ठत्यसौ मुनिः ॥ त्वरितं

मा०

॥ १ ॥

धर्मपुत्रोपि द्वारमागाद्युधिष्ठिरः ॥ १६ ॥ स्वागतं ते महाभाग स्वागतं ते महामुने ॥ अद्य मे सफलं जन्म अद्य मे तारितं कुलम् ॥ १७ ॥ अद्य मे पितरस्तुष्टास्त्वयि तुष्टे महामुने ॥ अद्य पूतोऽस्म्यहं सर्वैः कुलजैः सह दर्शनात् ॥ १८ ॥ श्रीनंदिकेश्वर उवाच ॥ सिंहासनमुपस्थाप्य पादशौचार्चनादिभिः ॥ युधिष्ठिरो महात्मा वै पूजयामास तं मुनिम् ॥ १९ ॥ ततः संतुष्टो मार्कंडः पूजितश्चाह तं नृपम् ॥ आख्याहि त्वरितं राजन् किमर्थं रुदितं त्वया ॥ २० ॥ केन वा क्लिष्टविभूतः का ते बाधा किमप्रियम् ॥ श्रीयुधिष्ठिर उवाच ॥ पृच्छामि त्वां द्विजश्रेष्ठ सर्वज्ञ सर्वदर्शिनम् ॥ २१ ॥ चिरंजीवी बहुज्ञो यः सर्वधर्मानवेक्षकः ॥ अस्माकं चैव यद्वृत्तं राज्यस्यार्थे महामुने ॥ २२ ॥ एतत्सर्वं विचिंत्याहं चिंतादुःखमुपागतः ॥ मार्कंडेय उवाच ॥ शृणु राजन् महाभाग क्षत्रधर्मव्यवस्थितिम् ॥ २३ ॥ नैव दृष्टं रणे पापं राज्ञो युद्धे वधाद्द्विषाम् ॥ धर्मेण युध्यतः स्वैरं पितृपैतामहैः पदैः ॥ २४ ॥ त्वं च राजन् धर्मनिष्ठः प्रजापालन तत्परः ॥ हतवान् क्षत्रधर्मेण स्वदायं प्रार्थयंश्चिरम् ॥ २५ ॥ पूर्वं संक्लेशितो दुष्टैः कूटद्यूतविवर्जितः ॥ भ्रातृभिः सहितः सर्वैर्द्रौपद्या सह भार्यया ॥ २६ ॥ वने द्वादश वर्षाणि स्वजनेष्वेकमप्युत ॥ तैस्तैः संपीडितः क्लेशैः धर्ममेवानुपालयन् ॥ २७ ॥ राजपुत्री वरारोहा स्वधर्मं समवेक्षती ॥ तैस्तैः क्लेशैस्तु संक्लिष्टा युष्मान् संप्राप्य पांडवान् ॥ २८ ॥ तदेव किं न दग्धास्ते क्रोधदृष्ट्या निरीक्षिताः ॥ कृष्णया तपसा चैव पातिव्रत्येन युक्तया ॥ २९ ॥ त्वया वा क्रूरया दृष्ट्या न निर्दग्धाः परंतप ॥ अहं वा चेत्तदा नो स्यां क्रोधदृष्ट्यादहं पुरा ॥ ३० ॥ मन्ये तच्च व्यतिक्रांतं प्राप्तकालं विचिंत्यते ॥ इदानीं शृणु राजेंद्र तव संतापकारणम् ॥ ३१ ॥ किंचिन्नास्ति

मा०

अ० १

॥ १ ॥

विशुद्धस्य यज्ञतः क्रतुभिर्मखैः ॥ वाजिमेधादिभिर्नित्यमिंद्रस्य पाथ तिष्ठति ॥ ३२ ॥ त्यज पापकृतां चिंतां न शोकं कर्तुमर्हसि ॥ नंदिकेश्वर उवाच ॥ इत्युपामंत्रितो राजा प्रणम्य शिरसा मुनिम् ॥ ३३ ॥ मार्कंडेयं महात्मानमिदमाह वचोर्थवत् ॥ पृच्छामि त्वां महाबाहो त्रिकालज्ञं महाद्युते ॥ ३४ ॥ कथय त्वं महाप्राज्ञ मुच्येहं पातकाद्यथा ॥ कालुष्यं मनसो मेऽद्य न गच्छति तथा कुरु ॥ ३५ ॥ तव वाग्जाह्नवीतोयैः स्नातस्यापि विशेषतः ॥ यथा मे निर्मलं भावि भजते मम मानसम् ॥ ३६ ॥ तथा कथय विप्राग्र्य संशुद्धेः कारणं परम् ॥ मार्कंडेय उवाच ॥ शृणु राजन् महाभाग यन्मां पृच्छसि भारत ॥ ३७ ॥ विना सांख्येन योगेन विना ज्ञानेन सुव्रत ॥ कथमात्यंतिका शुद्धिर्भवेद्यादिह मानसम् ॥ ३८ ॥ कालुष्यं त्यजते चैव सत्त्वनिष्ठं सुनिर्मलम् ॥ देवीं मायामुपाश्रित्य यावत्संसारगह्वरम् ॥ ३९ ॥ प्रविष्टोयमतिस्तब्धो ममेति पुरुषार्थवित् ॥ अनर्घ्यान्विषयान्मुंचन् विमुखो हरिमेधसः ॥ ४० ॥ सर्वात्मनः समदृश आत्मनः परमेष्ठिनः ॥ त्वं च राजन् विनीतात्मा नित्यं कृष्णमनुव्रतः ॥ ४१ ॥ यस्य ते परमो बंधुः सखा मंत्री सुहृत् गुरुः ॥ जगद्गुरुरमेयात्मा नित्यं चैव हिते रतः ॥ ४२ ॥ सारथ्यं कृतवान् प्रीत्या मोहस्तस्यापि किं विभो ॥ नूनं भगवतो माया योगिनामपि मोहिनी ॥ ४३ ॥ यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ॥ परोपि मनुते राजन् मुह्यते बोधितोपि सन् ॥ ४४ ॥ तथापि परमं गुह्यं वदतो मे निशामय ॥ निश्चित्य मुनिभिः सर्वैर्यदुक्तं तत्त्वदर्शिभिः ॥ ४५ ॥ ब्रह्मणोपि मुखाद्यन्मे श्रुतं सुबहुशस्तथा ॥ पूर्वं नारायणमुखात् श्रुतं विस्तरतः परम् ॥ ४६ ॥ विना यज्ञैर्विना दानैः सांख्ययोगं विनैव तत् ॥ आध्यात्मिकेन योगेन विनैव तपसा

तथा ॥ ४७ ॥ तीर्थसेवनमात्रेण मोहस्तु विनिवर्तते ॥ नाज्ञानेन विना मोहः सोपि पापफलं महत् ॥ ४८ ॥ तस्मात्सर्वप्रयत्नेन तीर्थसेवां समाचरेत् ॥ यस्तीर्थेषु नरः स्नाति स मुच्येतेनसोऽखिलात् ॥ ४९ ॥ स्वर्गलोकमवाप्नोति ह्यक्षय्यं फलमश्नुते ॥ निष्कामो विष्णुभक्तस्तु विष्णुलोकं व्रजेन्नरः ॥ ५० ॥ तेभ्योपि परमं गुह्यं सर्ववेदेषु निश्चितम् ॥ ब्रह्मविष्णुशिवाद्यैश्च सुविचार्य दिवौकसः ॥ ५१ ॥ मुनिभिर्निर्मलज्ञानैर्निश्चित्य च सुगोपितम् ॥ तीर्थराजाभिगमनं सर्वाज्ञाननिवारणम् ॥ ५२ ॥ अनंतपुण्यफलदमक्षय्यानंतलोकदम् ॥ प्रसिद्धं श्रुतिमूलं तु त्रिगुणाद्यहरं परम् ॥ ५३ ॥ पदेपदेऽश्वमेधस्य फलदं यत्स्मृतं बुधैः ॥ तस्माद्गच्छ महाराज प्रयागं प्रति भारत ॥ ५४ ॥ दर्शनात्स्पर्शनात्स्नानाद्गंगायमुनसंगमे ॥ निःपापो जायते मर्त्यः सेवनात्स्मरणादपि ॥ ५५ ॥ मोहो निवर्तते सद्यो जन्मांतरशतोद्भवः ॥ तस्मात्तद्गमनादेव त्वन्मोहो विनिवर्तते ॥ ५६ ॥ विनश्यति न संदेहस्तव ह्यज्ञानजं तमः ॥ ५७ ॥ इतिश्रीमत्स्यपुराणे प्रयागमाहात्म्ये प्रथमोध्यायः ॥ १ ॥ युधिष्ठिर उवाच ॥ भगवन् श्रोतुमिच्छामि पुराणमृषिभिः स्तुतम् ॥ ब्रह्मणा देवदेवेन यथावत् कथितं पुरा ॥ १ ॥ प्रयागस्य तु माहात्म्यं विधिं च गमने फलम् ॥ तत्सर्वं श्रोतुमिच्छामि यद्यनुग्राह्यता मयि ॥ २ ॥ स्नानं कथं च किं दानं नियमः कोऽथवा भवेत् ॥ कथं तस्य निवासः स्यान्मरणेन च का गतिः ॥ ३ ॥ स्नानस्य किं फलं तत्र दानस्याप्यथ किं फलम् ॥ निवासे किं फलं प्रोक्तं तन्मे वद सुविस्तरात् ॥ ४ ॥ ममानुग्रहतो विप्र विधेर्विष्णोश्च यच्छ्रुतम् ॥ मार्कंडेय उवाच ॥ कथयिष्यामि राजेंद्र यथावद्यन्मया श्रुतम् ॥ ५ ॥ आप्रयागप्रतिष्ठानाद्यत्पुरो वासुकेर्ह्रदात् ॥ कंबलाश्वतरौ नागौ

नागश्च बहुमूलकः ॥ ६ ॥ एतत्प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ॥ अत्र स्नाता दिवं यांति ये स्मृतास्तेऽपुनर्भवाः ॥ ७ ॥ अत्र ब्रह्मादयो देवा रक्षां कुर्वंति संगताः ॥ प्रयागे तीर्थराजे तु सर्वतीर्थाश्रये नृप ॥ ८ ॥ यावंति संति तीर्थानि तावत्को वक्तुमर्हति ॥ कथितुं नैव शक्यंते राजन् वर्षशतैरपि ॥ ९ ॥ संक्षेपेण प्रवक्ष्यामि महिमानं प्रयागजम् ॥ षष्टिर्गणसहस्राणि तत्र रक्षंति जाह्नवीम् ॥ १० ॥ यमुनां रक्षति सदा सविता सप्तवाहनः ॥ प्रयागं तु विशेषेण स्वयं रक्षेत्प्रजापतिः ॥ ११ ॥ मंडलं रक्षति हरिर्दैवतैः परिवारितः ॥ तं वटं रक्षति शिवः शूलपाणिर्महेश्वरः ॥ १२ ॥ स्थानं रक्षंति वै देवाः सर्वपापहरं शुभम् ॥ अधर्मेणावृता लोका नैव गच्छंति तत्पदम् ॥ १३ ॥ अल्प मल्पतरं पापं यदा तस्य नराधिप ॥ प्रयागं स्मरमाणस्य सर्वमायाति संक्षयम् ॥१४॥ दर्शनात्तस्य तीर्थस्य नामसंकीर्तनादपि ॥ मृत्तिकाल-भनाद्वापि नरः पापात्प्रमुच्यते ॥१५॥ पंचकुंडानि राजेंद्र येषां मध्येन जाह्नवी ॥ प्रयागदर्शनादेव पापं नश्यति तत्क्षणात् ॥ १६ ॥ योजनानां सहस्रेषु यो गंगां स्मरते नये ॥ अपि दुष्कृतकर्मासौ लभते परमं पदम् ॥ १७ ॥ कीर्तनान्मुच्यते पापात् दृष्ट्वा भद्राणि पश्यति ॥ अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम् ॥ १८ ॥ सत्यवादी जितक्रोधोप्यहिंसोथानसूयकः ॥ धर्मानुसारी तत्त्वज्ञो गोब्राह्मणहिते रतः ॥१९॥ गंगायमुनयोर्मध्ये प्रवेशादेव सत्वरम् ॥ निष्पापो जायते मर्त्यः पापकर्मरतोपि सन् ॥ २० ॥ प्रसन्नेनैव मनसा सर्वकामानवाप्नुयात् ॥ ततः प्राप्य प्रयागं तु सर्वदेवाभिरक्षितम् ॥ २१ ॥ ब्रह्मचारी वसन्मासं पितृदेवांश्च तर्पयेत् ॥ गंगायमुनयोश्चैव संगमे स्नानमाचरेत् ॥ २२ ॥ नित्यकर्मरतो विद्वान् पूतात्मा नियतेंद्रियः ॥ समर्चयेच्च तत्रत्या देवताः स्वेष्टदेवताः ॥ २३ ॥ पूजया मोदमानो यो नित्यं ब्राह्मणपूजकः ॥

दीनानाथांस्तर्पयाणो दयालुः क्रोधवर्जितः ॥ २४ ॥ ईप्सितान् लभते कामान् यत्र यत्राभिजायते ॥ तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥ २५ ॥ समागता महाभागा यमुना यत्र निम्नगा ॥ यत्र सन्निहितो देवः साक्षादेव महेश्वरः ॥ २६ ॥ प्राप्यते मानवैः पुण्यं प्रयागे तु यधिष्ठिर ॥ देवदानवगंधर्वा ऋषयः सिद्धचारणाः ॥ २७ ॥ तत्रोपस्पृश्य राजेंद्र स्वर्गलोकमुपाश्नुते ॥ अपिदुष्कृतकर्माणो ये नरा दुःखभागिनः ॥ २८ ॥ क्षेत्रदर्शनमात्रेण जायंते सुखिनो नराः ॥ पृथिव्यामटमाना ये लभंते शर्मणः क्वचित् ॥ २९ ॥ वेणीदर्शनमात्रेण जायंते सुखिनो नराः ॥ भूतप्रेतपिशाचा वा वेणीपानीयबिंदुभिः ॥ ३० ॥ स्पृष्टमात्रा विमुच्यंते दिव्यदेहधरा नृप ॥ स्वर्गलोकं प्रयांत्येव निष्पापाः शुद्धमानसाः ॥ ३१ ॥ नरके पच्यमाना ये यमशासनविप्लुताः ॥ आक्रंदमानाः सततं स्वकर्मपरिमोहिताः ॥ ३२ ॥ दैवात्तत्कुलजा वेण्यां स्नात्वा संतर्पयंति चेत् ॥ तदैव ते प्रमुच्यंते स्वर्गलोकं व्रजंति च ॥ ३३ ॥ दिवि स्वर्गेपि ये देवा भूमौ जन्माभिलाषिणः ॥ तीर्थराजे निवत्स्यामो मानुष्यं प्राप्य दुर्लभम् ॥ ३४ ॥ तत्र स्नातो नरो जातु तर्पयेत्कुलजान्यदि ॥ तदैव ते विमुच्यंते नानायोनिगता अपि ॥ ३५ ॥ येषां नामानि गृह्णीयात्प्रयागं प्राप्य दैवतः ॥ तिर्यग्योनिगताश्चापि मुच्यंते पापिनो नराः ॥ ३६ ॥ अपि दुष्कृतकर्माणो नानादुःखसमन्विताः ॥ दैवाद्गंधवहानीततद्रजःपुष्पवार्षिणः ॥ ३७ ॥ निरेनसः क्षणादेव समस्तसुखभाजनाः ॥ ३८ ॥ इति श्रीमत्स्यपुराणे प्रयागमाहात्म्ये द्वितीयोध्यायः ॥ २ ॥ मार्कंडेय उवाच ॥ शृणु राजन् प्रवक्ष्यामि माहात्म्यं पुनरेव तु ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १ ॥ आर्तानां च दरिद्राणां निश्चित्य च निवासिनाम् ॥ प्रयागान्नापरं किंचिद्वक्तव्यं न कदा

चन ॥ २ ॥ व्याधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः ॥ गंगायमुनसंभेदं प्राप्य प्राणान् परित्यजेत् ॥ ३ ॥ दीप्तकांचनवर्णाभैर्विमानैः सूर्यवर्चसैः ॥ गंधर्वाप्सरसां मध्ये स्वर्गे संमोदते चिरम् ॥ ४ ॥ ईप्सितान् लभते कामानेवं हि मुनयो विदुः ॥ सर्वरत्नमयैर्दिव्यैर्नानारत्नसमाकुलैः ॥५॥ वरांगनासमाकीर्णैर्मोदते क्षेमलंभनैः ॥ गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ॥ ६ ॥ यावन्न स्मरते जन्म तावत्स्वर्गे महीयते ॥ ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥७॥ हिरण्यरत्नसंपूर्णे प्रसिद्धे जायते कुले ॥ तदेव स्मरते तीर्थं प्राग्जन्मभवभावनः ॥ ८॥ पुनर्गच्छति तत्तीर्थं प्रयागं नात्र संशयः ॥ तत्र प्राणान्परित्यज्य ब्रह्मलोकं स गच्छति ॥ ९ ॥ ब्रह्मणा सह संप्राप्य प्रलये यच्चिदात्मकम् ॥ तदात्मतां वै लभते यद्गत्वा न पुनर्भवः ॥ १० ॥ यश्च प्रयागवासी तु गत्वान्यत्र विपद्यते ॥ स्वकर्मनिरतो धीरः शुद्धबुद्धिर्जितेंद्रियः ॥ ११ ॥ तान् लोकान्त्समवाप्नोति यत्र गत्वा न शोचति ॥ सर्वकामफला वृक्षा मही यत्र हिरण्मयी ॥ १२॥ ऋषयो मुनयः सिद्धास्तत्र लोके स गच्छति ॥ स्त्रीसहस्राकुले रम्ये मंदाकिन्यास्तटे शुभे ॥ १३॥ मोदते ऋषिभिः सार्धं सुकृतेनैव कर्मणा ॥ देशस्थो यदि वारण्ये विदेशे यदि वा गृहे ॥ १४ ॥ प्रयागं स्मरमाणोपि यस्तु प्राणान् परित्यजेत् ॥ ब्रह्मलोकमवाप्नोति सुकृतेनैव कर्मणा ॥ १५ ॥ तीर्थराजं समासाद्य नैव कुर्यात्प्रतिग्रहम् ॥ यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ १६॥ विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ प्रतिग्रहान्निवृत्तो यः संयतः स भवेन्नरः॥ १७ ॥ जीवैस्तु रहिते देशे दृष्टिपूते न्यसेत्पदम् ॥ स एव नियमः प्रोक्तस्तपस्तीर्थार्थवेदिभिः ॥ १८ ॥ गायत्र्यादींस्तथा मंत्रान् जपन्विद्यायुतो भवेत् ॥ एकादश्युपवासाद्यैरभक्ष्यपरिवर्जितैः ॥ १९ ॥ अनश्नन्वसतिं प्राप्य प्रातः स्नात्वा पुनर्गतैः ॥ पादत्राणं विना शक्त्या कंचुकोष्णी-

षवर्जनात् ॥ २० ॥ तैलाभ्यंगस्य चोत्सृष्ट्या ब्रह्मचर्येण वा पुनः ॥ तपसानेन संयुक्तः स तीर्थफलभाग्भवेत् ॥ २१ ॥ स्वार्थस्य रक्षणाच्चैव यथाशक्ति स्वदानतः ॥ कीर्तियुक्तो भवेद्यस्तु स तीर्थे विंदते फलम् ॥ २२ ॥ प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ॥ क्रोधेन रहितः साधुः स तीर्थफलमश्नुते ॥ २३ ॥ वेदपारायणाज्जाप्याज्जनितो यः प्रतिग्रहात् ॥ दोषो नश्येत सर्वोऽपि तस्मात्कुर्याज्जपं सदा ॥ २४ ॥ एवं यश्च समर्थोऽपि प्रतिग्रहपराङ्मुखः ॥ स चाप्नोति फलं सम्यगवाप्नोति च वांछितम् ॥ २५ ॥ सुवर्णमणिमुक्ता वा यदि वान्यप्रतिग्रहः ॥ स्वकार्ये पितृकार्ये वा देवताभ्यर्चनेऽपि वा ॥ २६ ॥ विफलं तस्य तत्तीर्थं यावत्तत्फलमश्नुते ॥ एवं तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च ॥ २७ ॥ निमित्तेषु च सर्वेषु अप्रमत्तो भवेद्द्विजः ॥ कपिलां पाटलीवर्णां यस्तु धेनुं प्रयच्छति ॥ २८ ॥ स्वर्णशृंगीं रौप्यखुरां चैलकंठां पयस्विनीम् ॥ रत्नपुच्छीं ताम्रपृष्ठीं कांस्यदोहां सवत्सकाम् ॥ २९ ॥ कौटुंबिकाय विप्राय सुशीलाय तपस्विने ॥ अभ्यर्च्य वासोलंकारैर्दद्याच्चैव सदक्षिणाम् ॥ ३० ॥ धर्मात्मने वेदविदे श्रोत्रियाय च भक्तितः ॥ त्रिवेण्यां तोषयेत्तं च दत्तानंत्यमभीप्सिता ॥ ३१ ॥ वासांसि च महार्हाणि रत्नानि विविधानि च ॥ यावद्रोमाणि तस्या गोः संति गात्रेषु सत्तम ॥ ३२ ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ यत्रासौ लभते जन्म सा गौस्तत्राभिजायते ॥ ३३ ॥ न च पश्येत्स नरो वै नरकं स तु पुण्यभाक् ॥ स्वर्गलोकात्परिभ्रष्टो जंबूद्वीपाधिपो भवेत् ॥ ३४ ॥ उत्तरान्स कुरून् प्राप्य मोदते कालमक्षयम् ॥ गवां शतसहस्रेण दद्यादेकां पयस्विनीम् ॥ ३५ ॥ पुत्रान् दारान् दासभृत्यानेका गौस्तारयेत्सदा ॥ तस्मात्सर्वेषु दानेषु गौरेका तु विशिष्यते ॥ ३६ ॥ दुर्गमे विषमे घोरे

तथा पातकसंकटे ॥ गौरेव रक्षां कुरुते सत्पात्रे प्रतिपादिता ॥ ३७ ॥ कुपात्राय च सा दत्ता दातारं नरकं नयेत् ॥ न लभ्यते यत्र पात्रं तत्र संकल्पपूर्वकम् ॥ ३८ ॥ पात्रं मनसि संधाय तोये तोयं विनिक्षिपेत् ॥ शालिग्रामसमीपे वा संकल्पं प्रविधाय च ॥ ३९ ॥ ततश्च तद्गृहं गत्वा दद्यात्तस्मै द्विजाय ताम् ॥ एवंकृते भवेत्तस्य फलं संपूर्णहेतवे ॥ ४० ॥ न दोषभाक् प्रतिग्राही त्वनेन विधिना तथा ॥ दाता प्रतिगृहीता च तद्गवालंभनात्सदा ॥ ४१ ॥ तरन्ते दुस्तरं चैव घोरं दुरितसागरम् ॥ ४२ ॥ इतिश्रीम० प्रया० तृतीयोध्यायः ॥ ३ ॥ युधिष्ठिर उवाच ॥ यथायथा प्रयागस्य महिमानं शृणोम्यहम् ॥ तथातथा भवत्येव मनसो भावशुद्धता ॥ १ ॥ भगवन् केन विधिना गच्छेत्तीर्थं नरः सुधीः ॥ विशेषात्तीर्थराजानं प्रयागं प्रति तद्वद ॥२ ॥ मार्कंडेय उवाच ॥ कथयिष्यामि ते वत्स तीर्थयात्राविधिक्रमम् ॥ यथोक्तमृषिभिः सर्वैर्विचार्य च सुनिश्चितम् ॥ ३ ॥ प्रस्थानात्पूर्वदिवसे क्षौरं चैव उपोषणम् ॥ घृतप्रधानकश्राद्धं विधाय नृपसत्तम ॥ ४ ॥ प्रथमां वसतिं प्राप्य घृतद्रोणेन पारयेत् ॥ स्नात्वा प्रतिदिनं गच्छेद्ब्रह्मचारी जितेंद्रियः ॥ ५ ॥ पादचारेण वसतिं पादत्राणविवर्जितः ॥ कंचुकोष्णीषरहितो यानारोहणवर्जितः ॥ ६ ॥ अनश्नन्नेव वसतिं यावन्नित्यं हरिं स्मरेत् ॥ आरोहणं गवां यत्नाद्वर्जयेन्नरकावहम् ॥ ७ ॥ दारुणो हि गवां क्रोधस्तेन यानेन यो व्रजेत् ॥ सलिलं न च गृह्णंति पितरस्तस्य देहिनः ॥ ८ ॥ ऐश्वर्याहंकृतो यो गोयानमारुह्य गच्छति ॥ निष्फलं तस्य यात्राया गतं तस्माद्विवर्जयेत् ॥ ९ ॥ यानमर्द्धफलं हंति तदर्धार्धमुपानहौ ॥ अशक्तस्तु यथाशक्त्या गच्छेद्भक्त्या हरिं स्मरन् ॥ १० ॥ तथापि तीर्थयात्रायाः फलं भवति नान्यथा ॥ यस्तु पुत्रांस्तथा दारान् स्नात्वा चैवात्मना सह ॥ ११ ॥ आत्मवच्च यथाशक्ति ब्राह्मणेभ्यः

प्रदापयेत् ॥ यत्रयत्र च जायेत तत्र सर्वैः सदैव तु ॥ १२ ॥ सहितो रूपसंपन्नैः स्वयं च गुणवान् भवेत् ॥ अनेकभोगसंयुक्तः संवसेदुत्तरान्
कुरून् ॥ १३ ॥ गंगायमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति ॥ आर्षेणैव विधानेन यथाविभवसंभवात् ॥ १४ ॥ न स पश्यति तं घोरं
नरकं तत्प्रभावतः ॥ उत्तरान् स कुरून् प्राप्य मोदते कालमक्षयम् ॥ १५ ॥ पुत्रान् दारांश्च लभते धार्मिकान् रूपसंयुतान् ॥ तत्र दानं
प्रदातव्यं यथाविभवसारतः ॥ १६ ॥ तीर्थं प्राप्य सकृत्स्नात्वा मुंडनं कारयेत्ततः ॥ देवान् पितॄंस्तर्पयित्वा तीर्थदेवान् समर्चयेत् ॥ १७ ॥
उपोषणं तीर्थप्राप्तं श्राद्धं कुर्याद्विधानतः ॥ द्विजानुज्ञां ततः प्राप्य स्वयं भुंजीत वाग्यतः ॥ १८ ॥ पोष्यैः सह महाबाहो दीनानाथांश्च
तर्पयेत् ॥ तेन पुण्यप्रभावेन यावदाभूतसंप्लवम् ॥ १९ ॥ स्वर्गे वसति धर्मात्मा विमानेनार्कवर्चसा ॥ क्रीडते सरसां मध्ये देवानां क्रीडनेषु
च ॥ २० ॥ वटमूलं समासाद्य यस्तु प्राणान् परित्यजेत् ॥ सर्वाँल्लोकानतिक्रम्य शिवलोकं स गच्छति ॥ २१॥ यत्र ते द्वादशादित्यास्तपंते
रुद्रमाश्रिताः ॥ निर्दहंति जगत्सर्वं वटमूलं न दह्यते ॥२२ ॥ नष्टचंद्रार्कपवनं यदा चैकार्णवं जगत् ॥ स्वपिति तत्र वै विष्णुर्जायमानः पुनः
पुनः ॥ २३ ॥ देवदानवगंधर्वा ऋषयः सिद्धचारणाः ॥ सदा यः सेवते तीर्थं गंगायमुनसंगमे ॥ २४ ॥ सर्वे देवाश्च ऋषयो वेणीजलसमा-
श्रिताः ॥ ब्रह्मा रुद्रश्च विष्णुश्च दिशश्चैव दिगीश्वराः ॥ २५ ॥ साध्याश्च पितरो नागास्तीर्थानि सरितस्तथा ॥ सागराः सप्त तिष्ठंति
सनकाद्या महर्षयः ॥२६॥ अंगिराप्रमुखाश्चैव तथा ब्रह्मर्षयः परे ॥ कपिलाद्यास्तथा सिद्धाः सुपर्णाश्च मरुद्गणाः ॥ २७॥ विद्याधराश्चक्रधराः
सर्वाण्यायतनानि च ॥ वेणीमाधवरूपेण यत्रास्ते भगवान् हरिः ॥ २८ ॥ शूलटंकेश्वरो रुद्रः स्वयं तिष्ठत्यसौ हरः ॥ ब्रह्मा प्रजापतिर्यत्र

कृत्वा यज्ञाननेकशः ॥ २९ ॥ स्वयं तिष्ठति लोकेशो लोकानुग्रहकारकः ॥ गंगायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् ॥ ३० ॥ प्रयागं राजशार्दूल त्रिषु लोकेषु विश्रुतम् ॥ ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत ॥ ३१ ॥ श्रवणात्तीर्थराजस्य नामसंकीर्तनादपि ॥ मृत्तिकालंभनाद्वापि नरः पापात्प्रमुच्यते ॥ ३२ ॥ तत्राभिषेकं यः कुर्यात्संगमे संशितव्रतः ॥ तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥ ३३ ॥ न वेदवचनात्तात न लोकवचनादपि ॥ मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥ ३४ ॥ दशतीर्थसहस्राणि षष्टिकोट्यस्तथापराः ॥ तेषां सान्निध्यमत्रैव सततं कुरुनंदन ॥ ३५ ॥ या गतिर्योगयुक्तस्य सत्वस्थास्य मनीषिणः ॥ सा गतिस्त्यजतः प्राणान् गंगायमुनसंगमे ॥ ३६ ॥ व्यर्थं जीवितमेतेषां प्रयागं येन जायते ॥ भुंजाना अपि भोगान् ये स्त्रीपुत्रधनसंयुताः ॥ ३७ ॥ ये प्रयागं न संप्राप्तास्त्रिषु लोकेषु वंचिताः ॥ ये देवादिह संप्राप्ताः प्रयागं सुरवल्लभम् ॥ ३८ ॥ तेषां वै सफलं जन्म दीनानामपि देहिनाम् ॥ मुच्यते सर्वपापेभ्यो ये दृष्ट्वैव तु तत्क्षणात् ॥ ३९ ॥ किं वा स्वर्गेण लब्धेन पुनरावर्तये यतः ॥ प्रयागदर्शनादेव मुच्यते सर्वपातकात् ॥ ४० ॥ मरणाद्यत्र कैवल्यं देवानामपि दुर्लभम् ॥ कंबलाश्वतरो नागो यमुनादक्षिणे तटे ॥ ४१ ॥ तत्र स्नात्वा च पीत्वा च सर्वपापैः प्रमुच्यते ॥ शूलटंकेश्वरं दृष्ट्वा शिवस्थानमनुत्तमम् ॥ ४२ ॥ नरस्तारयते पूर्वान् दशातीतान् दशापरान् ॥ अश्वमेधस्य यज्ञस्य पूजनाल्लभते फलम् ॥ ४३ ॥ वेणीजलाभिषेकेण पंचामृतघटोद्भवम् ॥ सहस्रगुणितं पुण्यं लभते नात्र संशयः ॥ ४४ ॥ पुष्पमात्रप्रदानेन शतसौवर्णिकं फलम् ॥ बिल्वपत्रप्रदानेन अनंतगुणितं भवेत् ॥ ४५ ॥ गंगायाः पूर्वभागे तु प्रतिष्ठाने नृपोत्तम ॥ सामुद्राख्यो महाकूपस्त्रिषु लोकेषु

विश्रुतः ॥ ४६ ॥ ब्रह्मचारी जितक्रोधस्त्रिरात्रं तत्र तिष्ठति ॥ यदि मर्त्यो विशुद्धात्मा सोऽश्वमेधफलं लभेत् ॥ ४७ ॥ उत्तरेण प्रतिष्ठानात् भागीरथ्यास्तु पूर्वतः ॥ हंसप्रपतनं नाम त्रिषु लोकेषु विश्रुतम् ॥४८॥ अश्वमेधफलं तत्र स्नातमात्रस्य भारत ॥ हंसवन्निर्मलो लोके जायते नात्र संशयः ॥ ४९ ॥ यावच्चंद्रश्च सूर्यश्च तावत्स्वर्गे महीयते ॥ उर्वशीपुलिने रम्ये विपुले हंसपांडुरे ॥ ५० ॥ परित्यजति यः प्राणान् मृत-स्यापि च यत्फलम् ॥ षष्टिर्वर्षसहस्राणि षष्टिर्वर्षशतानि च ॥५१॥ सेवते पितृभिः सार्धं स्वर्गलोकं नराधिप ॥ उर्वशी तं सदा पश्येद्देवलोके नराधिप ॥ ५२ ॥ पूज्यते तत्र सततमृषिगंधर्वकिन्नरैः ॥ ततः स्वर्गात् परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥ ५३ ॥ उर्वशीसदृशीनां तु कन्यानां लभते शतम् ॥ मध्ये नारीसहस्राणां बहूनां च पतिर्भवेत् ॥ ५४ ॥ दशग्रामसहस्राणां भोक्ता भवति भूमिपः ॥ काञ्चीनूपुरशब्देन सुप्तोसौ प्रतिबुध्यते ॥ ५५ ॥ भुक्त्वा तु विपुलान् भोगान् तत्तीर्थं लभते पुनः ॥ शुक्लांबरधरो नित्यं नियतः संयतेंद्रियः ॥ ५६ ॥ एककालं तु भुंजानो मासं भोगावतीं वसेत् ॥ सुवर्णालंकृतानां तु नारीणां लभते शतम् ॥ ५७ ॥ पृथिव्यां सागरांतायां महाभोगसमन्वितः ॥ धनधान्यसमायुक्तो दाता भवति धार्मिकः ॥ ५८ ॥ भुक्त्वा तु विपुलान् भोगान् तत्तीर्थं लभते पुनः ॥ अथ संध्यावटे रम्ये ब्रह्मचारी जितेंद्रियः ॥ ५९ ॥ उपासीत शुचिः संध्यां ब्रह्मलोकमवाप्नुयात् ॥ कोटितीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ॥ ६० ॥ कोटिवर्षसहस्राणि स्वर्गलोके महीयते ॥ ततः स्वर्गात् परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥ ६१ ॥ सुवर्णमणिमुक्ताढ्ये कुले जायेत रूपवान् ॥ ततो भोगावतीं गत्वा वासुकेरुत्तरेण तु ॥ ६२ ॥ दशाश्वमेधिकं नाम तीर्थं तत्रापरं भवेत् ॥ कृत्वाभिषेकं तु नरः सोऽश्वमेधफलं

ऽभवत् ॥ ६३ ॥ धनाढ्यो रूपवान् दक्षो दाता भवति धार्मिकः ॥ चतुर्वेदेषु यत्पुण्यं सत्यवादिषु यत्फलम् ॥ ६४ ॥ अहिंसकस्य यो धर्मो गमनादेव तत्फलम् ॥ कुरुक्षेत्रसमा गंगा यत्र कुत्रावगाहिता ॥ ६५ ॥ कुरुक्षेत्राद्दशगुणा यत्र विंध्येन संगता ॥ ततो दशगुणा प्रोक्ता काश्यां चोत्तरवाहिनी ॥ ६६ ॥ ततोऽसौ वै शतगुणा गंगासागरसंगता ॥ ततः सहस्रगुणिता कालिंद्या सह संगता ॥ ६७ ॥ प्रयागे सानंतगुणा गंगा पश्चिमवाहिनी ॥ सा राजन् दर्शनादेव महापापक्षयावहा ॥ ६८ ॥ महाभाग्येन सा लभ्या मकरस्थे रवौ भवेत् ॥ सूर्ये मकरराशिस्थे माघे मासेतिदुर्लभाः ॥ ६९ ॥ तत्र स्नानेन दानेन जपहोमार्चनादिना ॥ अनंतमक्षयं पुण्यं फलं भवति नान्यथा ॥ ७० ॥ तिलद्रोणयुतं तत्र तिलपात्रं घृतान्वितम् ॥ मधुना चैव संयुक्तं स्वर्णदक्षिणया सह ॥७१॥ विप्राय वेदविदुषे श्रोत्रियाय कुटुंबिने ॥ पूजयित्वा प्रदद्याद्यस्तस्य पुण्यमनंतकम् ॥ ७२ ॥ कल्पक्षयेपि तस्यांतो न भवेत्पुण्यकर्मणः ॥ यत्र गंगा महाभागा सिद्धक्षेत्रं ततः स्मृतम् ॥ ७३ ॥ सर्वतीर्थानि तत्रैव नात्र कार्या विचारणा ॥ क्षितौ तारयते मर्त्यान् नागांस्तारयतेप्यधः ॥ ७४ ॥ दिवि तारयते देवांस्तस्मात्त्रिपथगा स्मृता ॥ यावदस्थीनि तिष्ठंति गंगायां यस्य देहिनः ॥ ७५ ॥ तावद्युगसहस्राणि स्वर्गलोके महीयते ॥ तीर्थानां परमं तीर्थं नदीनां परमा नदी ॥ ७६ ॥ मोक्षदा सर्वभूतानां महापातकिनामपि ॥ सर्वत्र सुलभा गंगा त्रिषु स्थानेषु दुर्लभा ॥७७॥ गंगाद्वारे प्रयागे च गंगासागरसंगमे ॥ तत्र स्नात्वा दिवं यांति ये मृतास्तेऽपुनर्भवाः ॥ ७८ ॥ सर्वेषामेव भूतानां पापोपहतचेतसाम् ॥ गतिमन्वेषमाणानां नास्ति गंगासमा गतिः ॥ ७९ ॥ पवित्राणां पवित्रं तु मंगलानां तु मंगलम् ॥ महेश्वरशिरोभ्रष्टा सर्वपापहरा शुभा ॥ ८० ॥ इतिश्रीमत्स्यपु० प्रया० मा०

चतुर्थोऽध्यायः॥४॥ श्रीमार्कंडेय उवाच ॥ शृणु राजन् प्रवक्ष्यामि माहात्म्यं पुनरेव तु ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥१॥ मानसं नाम तत्तीर्थं गंगायामुत्तरे तटे ॥ त्रिरात्रोपोषितः स्नात्वा सर्वान् कामानवाप्नुयात् ॥ २ ॥ गोभूहिरण्यदानेन यत्फलं प्राप्नुयान्नरः ॥ स तत्फलमवाप्नोति तत्तीर्थं स्मरते तु यः ॥३॥ अकामो वा सकामो वा गंगायां यो विपद्यते ॥ प्राजापत्ये वसेल्लोके ब्रह्मा यावद्वसेत्स्वयम् ॥४॥ तेनैव सह संभूय परं ब्रह्माधिगच्छति ॥ हंससारसयुक्तेन किंकिणीजालमालिना ॥ ५ ॥ अप्सरोगणसंयुक्तः शृण्वन् गांधर्वमुत्तमम् ॥ रमते ब्रह्मणो लोके यः सकामो म्रियेत वै ॥ ६ ॥ ततो भूमिपतिर्भूत्वा राजन् राजाभिवंदितः ॥ भोगानुच्चावचान् भुंजन्पुनस्तत्रैव गच्छति ॥ ७ ॥ तत्र मुक्ततनुर्भूत्वा परं ब्रह्माधिगच्छति ॥ गवां शतसहस्रस्य सम्यग् दत्तस्य यत्फलम् ॥ ८ ॥ प्रयागे माघमासे तु त्र्यहःस्नातस्य तत्फलम् ॥ गंगायमुनयोर्मध्ये करीषाग्निं तु साधयेत् ॥ ९ ॥ अहीनांगो ह्यरोगश्च पंचेंद्रियसमान्वितः ॥ यावंति रोमकूपाणि तस्य गात्रेषु धीमतः ॥ १० ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ततः स्वर्गात्परिभ्रष्टो जंबूद्वीपपतिर्भवेत् ॥ ११ ॥ स भुक्त्वा विपुलान् भोगांस्तत्तीर्थं लभते पुनः ॥ तत्रैव मरणं प्राप्य विष्णुलोके महीयते ॥ १२ ॥ जलप्रवेशं यः कुर्यात्संगमे लोकविश्रुते ॥ राहुग्रस्तो यथा सोमो विमुक्तः सर्वपातकैः ॥ १३ ॥ सोमलोकमवाप्नोति सोमेन सह मोदते ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ १४ ॥ स्वर्गलोकमवाप्नोति गंधर्वाप्सरसेवितः ॥ परिभ्रष्टस्ततो लोकादग्निहोत्री भवेन्नरः ॥ १५ ॥ भुक्त्वा तु विपुलान् भोगांस्तत्तीर्थं लभते पुनः ॥ यस्तु देहं विकर्तित्वा शकुनिभ्यः प्रयच्छति ॥ १६ ॥ विहंगैरुपभुक्तस्य शृणु तस्यापि यत्फलम् ॥ शतवर्षसहस्राणि सोमलोके महीयते ॥१७॥

ततः स्वर्गात्परिभ्रष्टो जंबुद्वीपपतिर्भवेत् ॥ गुणवान् रूपसंपन्नो विद्वान् सुप्रियवाक्यवान् ॥ १८ ॥ भुक्त्वा तु विपुलान् भोगांस्तत्तीर्थं लभते पुनः ॥ अधःशिरास्तु यो भूत्वा धूम्रपानविधो नरः ॥ १९ ॥ शतं वर्षसहस्राणि स्वर्गलोके महीयते ॥ भुक्त्वा तु विपुलान् भोगांस्तत्तीर्थ-फलमश्नुते ॥ २० ॥ यामुने चोत्तरे कूले प्रयागस्य तु दक्षिणे ॥ ऋणप्रमोचनं नाम तत्तीर्थं परमं स्मृतम् ॥ २१ ॥ एकरात्रोषितः स्नात्वा ऋणैः सर्वैः प्रमुच्यते ॥ सूर्यलोकमवाप्नोति अनृणश्च सदा भवेत् ॥ २२ ॥ इतिश्रीम० प्रया० पंचमोऽध्यायः ॥ ५ ॥ युधिष्ठिर उवाच ॥ एतच्छ्रुत्वा प्रयागस्य यत्त्वया परिकीर्तितम् ॥ विशुद्धहृदयं जातं प्रयागस्य तु कीर्तनात् ॥ १ ॥ अनाशकफलं ब्रूहि भगवंस्तत्र कीदृशम् ॥ कं च लोकमवाप्नोति विमुक्तः सर्वपातकैः ॥ २ ॥ मार्कंडेय उवाच ॥ शृणु राजन् प्रयागे तु अनाशकफलं महत् ॥ प्राप्नोति पुरुषो धीमान् श्रद्धानो जितेंद्रियः ॥ ३ ॥ यावंतो दिवि वै लोकास्तेषु सर्वेषु वै चिरम् ॥ भुक्त्वा नानाविधान् भोगान् ततः पृथ्वीपतिर्भवेत् ॥ ४ ॥ सप्तद्वीपाधि-पत्यं तु प्राप्य रत्नधनैर्युतः ॥ पूर्ववासनया युक्तस्तीर्थराजनिषेवकः ५ ॥ तत्रैव निधनं प्राप्य वासुदेवपरायणः ॥ वैकुंठमेव प्राप्नोति सन्निधिं प्राप्य वै हरेः ॥ ६ ॥ पुनरावृत्तिरहितस्त्वनाशकफलं महत् ॥ एवं जानीहि सुमहत्तीर्थराजं प्रति ध्रुवम् ॥ ७ ॥ अहीनांगो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः ॥ अश्वमेधफलं तस्य गच्छतस्तु पदे पदे ॥ ८ ॥ कुलानि तारयेद्राजन् दशपूर्वान् दशापरान् ॥ मुच्यते सर्वपापेभ्यो गच्छेच्च परमं पदम् ॥ ९ ॥ युधिष्ठिर उवाच ॥ महाभाग्यं हि धर्मस्य यत्त्वं वदसि मे प्रभो ॥ अल्पेनैव प्रयासेन बहुधर्ममवाप्नुयात् ॥ १०॥ अश्वमेधस्तु बहुभिः प्राप्यते सुकृतैरपि ॥ इमं मे संशयं छिंधि परं कौतूहलं हि मे ॥ मार्कंडेय उवाच ॥ ११ ॥ शृणु राजन् महागुह्यं

सवपापप्रणाशनम् ॥ प्रयागे मासमात्रं तु यः स्नायान्नियतेंद्रियः ॥ १२ ॥ मुच्यते सर्वपापेभ्यो यथा दृष्टः स्वयंभुवा ॥ शुचिस्तु प्रयतो
भूत्वाऽहिंसकः श्रद्धयान्वितः ॥ १३ ॥ तिलाशी वा हविष्याशी भूमिशायी हरौ रतः ॥ स गच्छेत्परमं स्थानं यत्र गत्वा न शोचति ॥१४ ॥
विश्रम्भघातको यस्तु प्रयागं प्राप्य सोप्यथ ॥ भिक्षाशी च त्रिषवणं गंगास्नानपरायणः ॥ १५ ॥ त्रिभिर्मासैः प्रमुच्येत ब्राह्मणानामनु-
ग्रहात् ॥ अज्ञानेन तु यस्येह तीर्थं यात्रादिकं भवेत् ॥ १६ ॥ सर्वकामसमृद्धस्तु स्वर्गलोके महीयते ॥ स्थानं च लभते नित्यं धनधान्यसमा-
कुलम् ॥१७॥ एवं ज्ञानेन संपूर्णः सदा भवति भोगवान् ॥ तारिताः पितरस्तेन नरकात् प्रपितामहाः ॥१८ ॥ धर्मानुसारी तत्त्वज्ञः पृच्छतस्ते
पुनः पुनः ॥ गुह्यं वै प्रोच्यते सर्वं त्वत्प्रीत्यर्थं मयाधुना ॥ १९ ॥ शृणु राजन् महाप्राज्ञ यदुक्तं पद्मयोनिना ॥ ऋषीणां सन्निधौ पूर्वं कथ्यमानं
मया श्रुतम् ॥ २० ॥ पंचयोजनविस्तीर्णं प्रयागस्य तु मंडलम् ॥ प्रविष्टमात्रे तद्भूमावश्वमेधः पदेपदे ॥ २१ ॥ अतीतान् पुरुषान् सप्त भाविनश्च
चतुर्दश ॥ नरस्तारयते पूर्वान् यस्तु प्राणान् परित्यजेत्॥२२॥एवं ज्ञात्वा तु राजेंद्र सदा श्रद्धापरो भवेत् ॥ अश्रद्दधानः पुरुषः पापोपहतचे-
तसः ॥२३॥ न प्राप्नोति परं स्थानं प्रयागं देवरक्षितम् ॥ युधिष्ठिर उवाच ॥ स्नेहाद्वा द्रव्यलोभाद्वा यो वा कामवशं गतः ॥ २४॥ कथं यात्रा-
फलं तेषां तीर्थस्यापि फलं कथम् ॥ विक्रेतुः सर्ववस्तूनां कार्याकार्यं विजानतः ॥२५॥ प्रयागे का गतिस्तस्य चैतद्ब्रूहि महामुने ॥ मार्कंडेय
उवाच ॥ अनुबंधेन केनापि प्रयागं योऽधिगच्छति ॥२६॥ तुर्यांशं सोपि लभते यात्राया मानवः फलम् ॥ कृत्वा पापानि बहुशो विकर्मस्थो
जितेंद्रियः ॥२७॥ प्रयागं प्रविशन्नेव निष्पापो जायते क्षणात् ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनम् ॥ २८॥ पश्चिमस्योदधेः कूले रत्नपाल

इतिश्रुतः ॥ वणिग्बहुधनः सौम्यो द्रव्योपायविशारदः ॥ २९ ॥ सांयात्रिकेन विधिना क्रयविक्रयकारकः ॥ रत्नानि नानाद्वीपेभ्यः समा नीय महामतिः ॥ ३० ॥ संचयं परमं चक्रे नानोपायैर्विचक्षणः ॥ वस्त्राणि धनरत्नानि गृहे यावंति तस्य हि ॥ ३१ ॥ सुमेरावपि तावंति भविष्यंति न वेति वै ॥ दृष्ट्वा संदह्यते लोको निश्चयं नाधिगच्छति ॥ ३२ ॥ ज्ञातीनामाश्रयः सोतिधर्मात्मा संयतेंद्रियः ॥ महादानानि यावंति स चकार महामतिः ॥ ३३ ॥ वाग्मी दाता यशस्वी च साधूनामाश्रयप्रदः ॥ ईदृशस्यापि तस्यैव पुत्रचिंतातुरस्य हि ॥ ३४ ॥ विषयाणां सुखं नैव ज्ञायते गृहमेधजम् ॥ न जायतेऽस्य निद्रा वा व्याकुलस्य कदाचन ॥ ३५ ॥ अथ तस्य गृहे विप्रो विश्रांतः पथिकः क्वचित् ॥ पतित्वा पादयोस्तस्य पूजयित्वा विनीतवत् ॥ ३६ ॥ पप्रच्छ दुःखसंततः स्वप्रजायाश्च कारणम् ॥ निर्वेदवादिनं वैश्यं दुःखितो द्विजसत्तमः ॥ ३७ ॥ कृपया परयाविष्टश्चिंतयित्वा द्विजोऽब्रवीत् ॥ आदानाय प्रदानाय ऋणसंबंधमाश्रितैः ॥ ३८ ॥ अन्येश्चापि हि संबंधो जायते वा सुतः प्रभो ॥ दातव्यं वा गृहीतव्यं न तवास्तीह कस्यचित् ॥ ३९ ॥ केन ते जायतां पुत्रः संबंधेन हि विट्पते ॥ किमर्थं तप्यसे मोहात् कस्माच्चिंतां प्रपद्यसे ॥ ४० ॥ अहो कष्टं जनो नूनं कस्यचिन्मायया पुनः ॥ मुह्यतेऽपार्थमेवह क्लिश्यन् बहुधा भृशम् ॥ ४१ ॥ कः पिता कस्य वा भ्राता कस्य वा कः सुतोभवेत् ॥ अनादावत्र संसारे भ्राम्यमाणः स्वकर्मभिः ॥ ४२ ॥ कः समर्थो भगवतो मायां तां परमोहिनीम् ॥ तर्तुं यः प्रभवेत्तीव्रां बलादेव [illegible] ॥ ४३ ॥ तस्मै नमो भगवते वासुदेवाय वेधसे ॥ यस्य प्रसादात्संसारं तरंति सदनुग्रहात् ॥ ४४ ॥ अहो वैश्यकुलश्रेष्ठ शृणु मे परमं वचः ॥ प्रयागं व्रज

धर्मात्मन् यदि पुत्रफले स्पृहा ॥ ४५ ॥ यस्य प्रसादात्सकलाः कामाः सिध्यंति देहिनाम् ॥ माघः संप्रति नो दूरे वृश्चिकस्थो दिवाकरः ॥ ४६ ॥ माघं प्रयागे यः स्नाति तस्य मोक्षोप्यदूरतः ॥ कामनाः किंपुनस्तस्य सिध्यंतीति विचारणा ॥ ४७ ॥ यियासुस्तत्र चाहं तु त्वमथागच्छ सांप्रतम् ॥ अवश्यं भविता पुत्रः प्रसादाज्जगदीशितुः ॥ ४८ ॥ इत्युक्तो रत्नपालोऽसौ प्रणिपत्य पुनः पुनः ॥ तर्हि मां नय सार्थेन द्विजश्रेष्ठोद्धरस्व माम् ॥ ४९ ॥ ततः स वैश्यो राजर्षे स्वानुयात्रां विधाय च ॥ प्रातिष्ठत प्रयागाय शुभलग्ने शुभे दिने ॥ ५० ॥ सार्थवाहः स्वयमभूद्दीनानामनुपालकः ॥ समासेन तु सार्द्धेन प्रयागं प्राप्तवान्नृप ॥५१॥ तेनैव द्विजमुख्येन कारितो विधिमुत्तमम् ॥ यात्रायाः स्नानदानादेः पुत्रकामस्य सुव्रत ॥ ५२ ॥ अथ तं कारयामास माघस्नानविधिं पुनः ॥ तस्य चानुग्रहार्थाय केवलं स द्विजोत्तमः ॥ ५३ ॥ अथ स्नात्वा सुसंकल्पं माघं संपूज्य देवताः ॥ ब्राह्मणान् भोजयामास दक्षिणाभिरतोषयत् ॥ ५४ ॥ द्विजानुज्ञां ततो गृह्य स्वेष्टदेशं जगाम ह ॥ तीर्थराजप्रभावेन तस्य पत्नी शुचिव्रता ॥ ५५ ॥ ज्येष्ठा दधार वै गर्भं तोषयामास तं पतिम् ॥ स गर्भो ववृधे नित्यं शुक्लपक्षे यथा शशी ॥ ५६ ॥ ततः कालेन संजातः पुत्रस्तस्य सुखावहः ॥ रत्नपालोतिसंतुष्टो द्विजानाहूय बुद्धिमान् ॥ ५७ ॥ सुव्रतान् वेदविदुषः कर्मकाण्डविदो बुधान् ॥ जातकं कारयामास गोरत्नधनसंचयान् ॥ ५८ ॥ दत्त्वा तेषामाशिषश्च गृहीत्वा हृष्टमानसः ॥ सूतमागधवंदिभ्यो यथा- हेमददद्विभुः ॥५९॥ दीनानाथांश्च पंग्वादीनन्नाद्यैः समतोषयत् ॥ एवमन्यानि कर्माणि नामादीनि मुदा युतः ॥ ६० ॥ कारयित्वा विवाहं च तस्य पुत्रस्य सोकरोत ॥ तस्य स्नेहः प्रतिदिनं ववृधे पुत्रदर्शनात ॥ ६१ ॥ पुत्रालिंगनतोनंत आनदंः समवर्धत ॥ स्वर्गानंदादतिपरो ह्यधनस्य

धनागमात् ॥ ६२ ॥ एवं गृहे प्रसक्तस्य धनधान्ययुतस्य च ॥ धनदस्येव वैश्यस्य रत्नपालस्य तस्य च ॥ ६३ ॥ सुखेष्वभिरतस्यास्य जरठस्याविजानतः ॥ अविज्ञातगतिः स्वैरं स कालः प्रत्युपस्थितः ॥ ६४ ॥ पुत्रस्तं दापयामास दशदानानि कृत्स्नशः ॥ धर्मार्थविनयोपेतः सत्कर्मनिरतः शुचिः ॥ ६५ ॥ रूपवान् गुणवान् वाग्मी सततं प्रियभाषणः ॥ बांधवानां प्रियो नित्यं वक्ता दाता गुणप्रियः ॥ ६६ ॥ पितृभक्त्या सुसंपन्नः पितृमेधं चकार ह ॥ ददौ धनं द्विजातिभ्यो यच्च यावत्पितुः प्रियम् ॥ ६७ ॥ प्रयागमविमुक्तं च गयां गत्वा पितुः प्रियः ॥ पितृश्राद्धानि सर्वाणि चकार विधिवत्तदा ॥ ६८ ॥ देवालयानि तत्रापि पूजनार्थं धनं ददौ ॥ सुप्रवृत्तस्तथैवं स सदा धर्मपरायणः॥६९॥ वसुपालो वैश्यपुत्रो विषयान् बुभुजे सुखी ॥ गायकैर्वादकैः सार्द्धं स्वयं गायनतत्परः ॥ ७० ॥ तादृशैरेव सखिभिः क्रीडतेऽहर्निशं तथा ॥ वनिताभिः समं क्रीडन् संगत्या स तथाविधैः ॥ ७१ ॥ तत्परः सततं स्रग्वी दिव्यचंदनचर्चितः ॥ वीणावादनतत्त्वज्ञस्ततस्तत्वानंदनिर्वृतः ॥ ७२ ॥ तदेव बहुमेने स स्वधर्माद्विरराम च ॥ वैश्यारतोऽभवत्तासां संसर्गात्पानपोऽभवत् ॥ ७३ ॥ द्यूतक्रीडारतो नित्यं सत्संगरहितोल्पधीः ॥ एवं बहुविधं कालं स दुर्व्यसनतत्परः ॥ ७४ ॥ तत्र रूपवती नाम वेश्यासीदतिसुंदरी ॥ तस्यां विषक्तहृदयः सर्वरत्नैरतोषयत् ॥ ७५ ॥ धनं तया समं पित्र्यं व्ययितं बहुलं स्वकम् ॥ सापि रूपवती तस्मिन् विषक्तहृदयाभवत् ॥ ७६ ॥ दंपत्योरिव तत्प्रीतिः परस्परमवर्धत ॥ ततः कदाचिन्निर्विण्णश्चिंताशोकपरायणः ॥ ७७ ॥ निर्धनो जनविद्विष्टो यैर्निषिद्धोभवत्पुरा ॥ लज्जमानस्तु तान् सर्वान् दृष्ट्वासौ दैन्यमागतः ॥ ७८ ॥ रूपवत्यापि तं दृष्ट्वा चिंताशोकसमन्विता ॥ समाश्वासयदव्यग्रा कांत चिंतां

त्यजेति च ॥ ७९ ॥ अस्ति यन्मद्गृहे किंचिद्धनं यच्च त्वयार्पितम् ॥ स्वामी तस्य समस्तस्य केवलं तस्य रक्षकीम् ॥ ८० ॥ मां विद्धि
सततं कांत त्वद्दासीं त्वत्परायणाम् ॥ क्रयविक्रययोरर्थे तव यद्यदपेक्षितम् ॥ ८१ ॥ गृहीष्व मद्गृहात्तत्तत्किमर्थं दैन्यमागतः ॥
इत्यधोमुखमासीनमाश्वास्य भृशदुःखितम् ॥ ८२ ॥ वस्त्राशनादितद्गेहे प्रेषयामास सादरम् ॥ धनं बहुविधं दत्वा
क्रयविक्रयकारणात् ॥ ८३ ॥ लज्जामपास्य तं चापि यथापूर्वमकारयत् ॥ स पुनर्वर्धयामास धनं व्ययपराङ्मुखः ॥ ८४ ॥ भोगान्
भुंजन् रूपवत्या रेमे बहुसुखं नृप ॥ ततः प्रवयसं दृष्ट्वा आत्मानं रूपवत्यपि ॥ ८५ ॥ तीर्थे कृतमतिश्चापि वसुपालं
ततोब्रवीत् ॥ क्रीडितं बहुकालं नौ गतं चापि नवं वयः ॥ ८६ ॥ कृतं बहुविधं पापं निष्कृतिस्तस्य चिंत्यताम् ॥ अत्रत्या बहवो लोकाः
स्नानार्थं गंतुमुद्यताः ॥ ८७ ॥ प्रयागं तीर्थराजानं सद्यः पातकनाशनम् ॥ गमिष्यामो वयं चापि क्रियतामर्थसाधनम् ॥ ८८ ॥
तवापि यदि चेच्छ्रद्धा युज्यंतां शकटानि च ॥ वाणिज्यमपि तत्रैव भविष्यति न संशयः ॥ ८९ ॥ इति निश्चित्य तरसा नानाभांडं प्रगृह्य
च ॥ प्रयागं जग्मतुर्हर्षात्स्वजनैः सहितौ नृप ॥ ९० ॥ शकटाटोपकरणं सहैव विपणायनम् ॥ प्रयागं प्राप्य मासं तु गंगायमुनसंगमे ॥ ९१ ॥
सस्नतुर्विधिना चापि उद्यापनसमन्वितम् ॥ दानानि चक्रतुर्भक्त्या ब्राह्मणान् स्वस्ति वाच्य च ॥ ९२ ॥ पुनस्तौ स्वपुरं यातौ कियत्कालं
समासतुः ॥ ततः प्रवयसौ भूत्वा कालेन निधनं गतौ ॥ ९३ ॥ प्रयागस्नानमाहात्म्यान्निष्पापौ स्वर्गमीयतुः ॥ विमानवरमारुह्य दिव्यरत्न-
विभूषितौ ॥ ९४ ॥ कांचनापीडशोभाढ्यौ नानाभोगसमन्वितौ ॥ विजह्रतुर्बहुसुखं गंधर्वाप्सरसां गणैः ॥ ९५ ॥ देवोद्यानेषु रम्येषु काम-

नीचतराकृतिः ॥ ततस्तु पुण्यभोगांते वैश्यो भूमितले गतः ॥ ९६ ॥ कोसलाधिपतेः पुत्रो वसुदान इति श्रुतः ॥ रूपवत्यपि वैदेही जनकानां कुलोचिता ॥ ९७ ॥ तयोर्विवाहः संवृत्तो याश्चासंस्तत्र योषितः ॥ सर्वास्ता अपि तेनैव भुक्त्वा स्वर्गं ततो भुवि ॥ ९८ ॥ राजकन्या पुनर्भूत्वा पातिव्रत्यगुणान्विता ॥ तमेवाविंदत पतिं रेमे च शुभलक्षणा ॥ ९९ ॥ वसुदानोपि सर्वाभिः क्रीडंस्ताभिर्मुदान्वितः ॥ रेमे रूपवतीः प्राप्य समुद्रांतभुवः पतिः ॥ १०० ॥ ब्राह्मणार्पितलक्ष्मीको धर्मात्मा सत्यसंगरः ॥ देवब्राह्मणगोप्ता च द्विजशीतनिवारकः ॥ १०१ ॥ रूपवत्यपि सा ज्येष्ठा श्रेष्ठा तस्य प्रियाभवत् ॥ दानपुण्यरता शश्वद्भर्तुश्छंदानुवर्तिनी ॥ १०२ ॥ अतिथीनां द्विजातीनां सदा पूजनतत्परा ॥ देवार्चनपरा नित्यं गवां शुश्रूषयान्विता ॥ १०३ ॥ पुत्रान् सा सुषुवे पंच कन्यास्तिस्रः प्रमद्वराः ॥ कृत्वा देवालयांस्तत्र नित्यपूजार्थमादरात् ॥ १०४ ॥ ददौ ग्रामान् समृद्धांस्तु सुशीला व्रतकारिणी ॥ एवं स राजा धर्मात्मा भुक्त्वा भोगान्मनोरमान् ॥ १०५ ॥ बभूव परमप्रीतः सदा ब्राह्मणमध्यगः ॥ कदाचिदुपविष्टोसौ स्त्रीणां मध्यगतोपि सन् ॥ १०६ ॥ नर्मक्रीडापरस्ताभिरादर्शे दृष्टवान् निजम् ॥ आत्मानं जरसा युक्तमबुध्यत स बुद्धिमान् ॥ १०७ ॥ पुत्रांश्च स महेष्वासान् गुणिनो लोकरंजकान् ॥ प्रजानुरागमुद्वीक्ष्य सर्वप्रियकृदच्युतः ॥ १०८ ॥ पत्नीभिः सह संमंत्र्य चानुमान्य पुरोधसम् ॥ प्रतिपादयितुं राज्ये पुत्राय स मनो दधे ॥ १०९ ॥ सभार्यमुपविष्टस्य कदाचित्तस्य धीमतः ॥ मुनयोभ्यागमन् द्रष्टुं राजर्षिं तं महाद्युतिम् ॥ ११० ॥ तान् दृष्ट्वा सहसोत्थाय राजर्षिः स सभासदः ॥ ननाम शिरसा तूर्णं स्वागतेनाभ्यनंदयत ॥ १११ ॥ पूजयामास तांस्तान् वै कृतासनपरिग्रहान् ॥ ततो नानाकथा-

श्वकुः पूर्वेषां ते महीक्षिताम् ॥ ११२ ॥ प्रयागादीनि तीर्थानि कीर्तयंतः शुचिव्रताः ॥ राजानं तोषयामासुः स्मारयंतोस्य यत्कृतम् ॥ ११३ ॥ ततः पूर्वकृतं यत्तु तीर्थराजस्य सेवनम् ॥ तदेव मनसा ध्यात्वा मुनीशान् पर्यपृच्छत ॥ ११४ ॥ धर्मेण शासितं राज्यं तोषिताः पितरोग्नयः ॥ यजनैः श्राद्धदानैश्च संतानेन मखैरपि ॥ ११५ ॥ प्रजाश्च पालिताः सम्यक् सोयं वो मदनुग्रहः ॥ दातुमिच्छामि पुत्राय राज्यं निष्कंटकं त्विदम् ॥ ११६ ॥ गजवाजिरथोपेतं प्रभूतधनधान्यवत् ॥ बलेन महता युक्तं मंत्रिणा संमतेन च ॥ ११७ ॥ भवंतोप्यनुमोदध्वमस्मिन्नर्थे समाहिताः ॥ ब्राह्मणैः सहितो राजा यत्करोति तदाज्ञया ॥ ११८ ॥ सर्वं सफलतां याति महत्कीर्तिं च विंदति ॥ एवमुक्तास्तु मुनयो राजानं विनयान्वितम् ॥ ११९ ॥ प्रत्यूचुर्हृष्टमनसो महाराज विधेहि तत् ॥ अस्माभिर्यच्च वक्तव्यं स्वयमेव तथाकृतम् ॥ १२० ॥ यच्च यावच्च कर्तव्यमवशिष्टं च यत्तव ॥ चिंतितं मनसा यत्ते प्रयागगमनं प्रभो ॥ १२१ ॥ राज्यं पुत्राय दत्वा त्वं प्रयागं गच्छ सत्वरम् ॥ समयस्तीर्थयात्रायाः स्वस्ति तेस्तु समीहितम् ॥ १२२ ॥ सिध्यतां साधयामो वै वयं चापि धरापते ॥ इत्युक्त्वा मुनयः सर्वे जग्मुश्चापि यथागतम् ॥ १२३ ॥ अभिषिच्य सुतं राज्ये राजा सांतःपुरस्ततः ॥ प्रययो हर्षसंपन्नो निरहंकृतिरात्मवान् ॥ १२४ ॥ निर्मलो निःस्पृहः शांतो व्रतैः कृच्छ्रादिभिर्युतः ॥ नित्यं त्रिषवणस्नायी तपश्शुद्धकलेवरः ॥ १२५ ॥ कालेन निधनं प्राप्तो राज्यश्चानुययुः पतिम् ॥ समानव्रतचारिण्यः पतिव्रतपरायणाः ॥ १२६ ॥ प्रजापतिपतिर्ब्रह्मा विमानमधिरोप्य तम् ॥ निनाय स्वपदं राजन् नानाभोगसमन्वितम् ॥ १२७ ॥ ताश्च सर्वाः सहैतेन दिव्यालंकारभूषिताः ॥ एवंप्रभावः कथितः

प्रयागस्य महाद्भुतः ॥ १२८ ॥ प्रसंगेनापि यं प्राप्य दुर्लभां गतिमाप्नुयात् ॥ एतत्ते कथितं गुह्यमाख्यानं राजसत्तम ॥ १२९ ॥ इति म० प्रया० षष्ठोऽध्यायः ॥ ६ ॥ युधिष्ठिर उवाच ॥ अद्य मे सफलं जन्म अद्य मे तारितं कुलम् ॥ प्रीतोस्म्यनुगृहीतोस्मि दर्शनात्ते तपोधन ॥ १ ॥ अद्य मुक्तोस्मि सर्वस्मात्किल्बिषात्त्वदनुग्रहात् ॥ शुद्धं मे मानसं जातं दर्शनादेव ते मुने ॥ २ ॥ शुद्धचित्तोस्म्यहं ब्रह्मन् जाता मे विमला मतिः ॥ श्रीमार्कंडेय उवाच ॥ दिष्ट्या ते विमला बुद्धिर्दिष्ट्या चित्तं स्थिरं तव ॥ ३ ॥ दिष्ट्या त्वं निर्मलो जातः श्रवणादेव सुव्रत ॥ पृच्छस्व यत्प्रवक्तव्यं किमन्यच्छ्रोतुमिच्छसि ॥४॥ युधिष्ठिर उवाच ॥ यमुनास्नानजं पुण्यं किं वा फलमुदीरितम् ॥ तन्मे वद समासेन यद्यनुग्राह्यता मयि ॥५॥ श्रीमार्कंडेय उवाच ॥ तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥ समागता महाभाग यमुना यत्र निम्नगा॥ ६॥ संभूय गंगया सार्द्धं सहैवाब्धिमुपागता ॥ स्मरणात्कीर्तनाद्वापि सर्वपापक्षयावहा ॥ ७ ॥ तत्र स्नात्वा च पीत्वा च निष्पापो जायते क्षणात् ॥ गंगया सह संगम्य सरस्वत्या तथा शुभा ॥८॥ तेन वेणीति विख्याता त्रैलोक्ये परमोत्तमा ॥ पापेन्धनदवज्वाला पापद्रुमकुठारिका ॥९॥ सा राजन् दर्शनादेव सर्वपापौघहारिणी॥ स्वर्गद्वारस्य निश्रेणिर्या वेणीव विराजते॥ १०॥मोक्षलक्ष्मीर्हिरण्यं च सेयं वेणी विमुक्तिदा॥ तत्र स्नात्वा च पीत्वा च पुनात्यासप्तमं कुलम् ॥११॥ प्राणांस्त्यजति यस्तत्र स याति परमां गतिम् ॥ तत्र सूर्यसुतायां यः स्नात्वान्यत्र मृतो यदि ॥१२॥ सूर्यलोकमवाप्नोति दिव्यभोगसमान्वितः ॥ तत्र यस्त्यजते प्राणान् स याति परमां गतिम् ॥१३॥ अग्नितीर्थमिति ख्यातं यमुनादक्षिणे तटे॥ तत्र स्नात्वा नरो याति अग्निलोकं न संशयः ॥ १४ ॥ पश्चिमे धर्मराजस्य तीर्थं त्वनरकं स्मृतम् ॥ तत्र स्नात्वा दिवं याति ये मृता-

स्तेऽपुनर्भवाः ॥ १५ ॥ वीरतीर्थमितिख्यातं पश्चिमे तस्य भूपते ॥ तत्र स्नात्वा वीरलोकं प्राप्नोति विरजः पुमान् ॥ १६ ॥ विजयं प्राप्नुयाद्विद्वान्
शौर्यधैर्ययुतः सदा ॥ यमुनादक्षिणे श्रीमान् विष्णुर्माधवनामतः ॥ १७ ॥ तदधस्त्वात्तु तत्तीर्थं तत्र स्नात्वा विधानतः ॥ पूजयेन्माधवं
भक्त्या विष्णुलोकं प्रपद्यते ॥ १८ ॥ प्राणांस्त्यजति चेत्तत्र जायते ह्यपुनर्भवः ॥ तस्मात्तु पूर्वदिग्भागे सोमतीर्थमिति स्मृतम् ॥ १९ ॥
सोमेश्वरं समभ्यर्च्य सोमलोके महीयते ॥ तत्र सोमस्तपस्तेपे सहस्रपरिवत्सरान् ॥ २० ॥ संस्थाप्य लिंगं श्रीशंभोश्शांतये राजयक्ष्मणः ॥
यथापूर्वं निजं देहं प्राप्तः शंभोरनुग्रहात् ॥ २१ ॥ तत्र स्नात्वा तु रोगेण मुक्तो भवति नान्यथा ॥ हित्वा कलेवरं तत्र शिवलोकं स
गच्छति ॥ २२ ॥ कुबेरतीर्थं तत्पूर्वं तत्र स्नात्वा दिवं व्रजेत् ॥ पश्चिमे सोमतीर्थस्य सूर्यतीर्थमिति स्मृतम् ॥ २३ ॥ तत्र स्नात्वा नरो याति
सूर्यलोकं न संशयः ॥ तत्पश्चिमे वारुणं तु तीर्थं परमपावनम् ॥ २४ ॥ तत्र स्नात्वा नरो राजन् सर्वपापैः प्रमुच्यते ॥ तत्पश्चिमे
वायुतीर्थं त्रिषु लोकेषु विश्रुतम् ॥ २५ ॥ तत्र स्नात्वा वायुपीडा न भवेन्मनुजस्य हि ॥ उत्तरे यमुनायास्तु गवां तीर्थं परं स्मृतम् ॥ २६ ॥
तत्र स्नात्वा नरो याति गोलोकं नात्र संशयः ॥ तत्पूर्वभागे त्वादित्यतीर्थं त्रैलोक्यविश्रुतम् ॥ २७ ॥ अदित्या यत्र वै तप्तं तपः परमपावनम् ॥
पुत्राणां परमैश्वर्यं पुनर्यत्राप सा पुरा ॥ २८ ॥ यत्र ते द्वादशादित्या देवा इंद्रपुरोगमाः ॥ उपासते सदा देवाः प्रजापतिमकल्मषाः ॥ २९ ॥
तत्र स्नात्वा श्रियं मर्त्यो नष्टामप्याप्नुयात्पुनः ॥ तीर्थं निरंजनं नाम यत्र देवाः सवासवाः ॥ ३० ॥ उपासते च संध्यायां नित्यकालं युधिष्ठिर ॥
सेवंते मुनयस्तत्र पुण्यतीर्थं सदैव हि ॥ ३१ ॥ भरद्वाजादयोभ्येत्य प्राप्तं तत्परमं पदम् ॥ वेणीमाधवनाम्ना च यत्र विष्णुः सनातनः ॥ ३२ ॥

तिष्ठत्यत्र ददत्कामान् दर्शनादघहा नृणाम् ॥ लोकानुग्रहमात्रेण निरूपो विश्वरूपभाक् ॥ ३३ ॥ यत्र सा विमला नाम लक्ष्मीः परमपावनी ॥ भक्तानामिष्टदा नित्यं दर्शनात्सिद्धिदा नृणाम् ॥ ३४ ॥ तीर्थराजत्वमेतस्य प्रयागस्य यतः स्मृतम् ॥ तत्कारणं त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥ ३५ ॥ अधिष्ठानं तथैवेषां प्रयागं विद्धि पापहृत् ॥ तीर्थानां परमं तीर्थं सर्वतीर्थाश्रयाश्रयम् ॥ ३६ ॥ तीर्थराजं समाश्रित्य शुद्धत्वं याति सर्वशः ॥ सर्वतीर्थेषु यत्पापं पापिनां यत्तु संस्थितम् ॥ ३७ ॥ आवर्षं निष्कृतिस्तस्य माघस्नानात् प्रजायते ॥ श्रद्दधानस्तत्र गत्वा राजन् स्नानं समाचर ॥ ३८ ॥ यानि चान्यानि संत्यत्र तीर्थानि सुबहून्यपि ॥ एकस्मिन्नपि चैतेषां स्नात्वा वै त्रिदिवं व्रजेत् ॥ ३९ ॥ प्राणांस्तत्र परित्यज्य न भवेज्जन्मभाङ्नरः ॥ गंगा च यमुना चैव उभे तुल्यफले स्मृते ॥ ४० ॥ गुप्तया तु सरस्वत्या मीलिते जीवभूतया ॥ ब्रह्मपुत्र्या ऋषीणां तु तपसां फलभूतया ॥ ४१ ॥ अत एव त्रिलोकस्थैः प्रयागं सेव्यते सदा ॥ गंगा त्रिपथगा यत्र यमुना च सरस्वती ॥ ४२ ॥ यत्र सर्वेपि ते देवा वेदाश्च ऋषिभिः सह ॥ तिष्ठंति संश्रिता नित्यं तन्माहात्म्यं तु कोर्हति ॥ ४३ ॥ वक्तुं वर्षसहस्रेण शेषेणापि न शक्यते ॥ ब्रह्मणापि स्वयं यत्र अश्वमेधा महामखाः ॥ ४४ ॥ तस्य कुंडत्रयं तत्र मध्ये वेदी प्रतिष्ठिता ॥ प्रतिष्ठानमाहवनीयः प्रयागं गार्हपत्यकः ॥ ४५ ॥ अलर्कपुरमेवैतद्दक्षिणाग्निः स्मृतो बुधैः ॥ तेषां मध्ये समायाता गंगा च यमुना नदी ॥ ४६ ॥ वेदीमध्येन वै दीप्ते दिव्यरूपधरेऽनघे ॥ यावदत्र स्थितं यच्च प्रत्येकमघहारि तत् ॥ ४७ ॥ सर्वेषां संस्थितिर्यत्र किं विचार्यं फलं भवेत् ॥ यस्त्वेतत्कल्य उत्थाय पठते वा शृणोति यः ॥ ४८ ॥ मुच्यते सर्वपापेभ्यः स्वर्गलोकं स गच्छति ॥ ४९ ॥ इति

श्रीम० प्रयागमाहात्म्ये सप्तमोध्यायः ॥ ७ ॥ युधिष्ठिर उवाच ॥ श्रुतं मे ब्रह्मणा प्रोक्तं पुराणे ब्रह्मसंभवे ॥ तीर्थानां तु सहस्राणि प्रयुता-
न्यर्बुदानि च ॥ १ ॥ सर्वाण्येव सुपुण्यानि पापहारीणि सर्वशः ॥ पृथिव्यां नैमिषं पुण्यमंतरिक्षे च पुष्करम् ॥ २ ॥ कुरुक्षेत्रं हरिद्वारं
द्वारकां मथुरां तथा ॥ अयोध्यादीनि पुण्यानि परित्यज्य द्विजोत्तम ॥ ३ ॥ कथमेकं प्रयागं त्वमाधिक्येन प्रशंससि ॥ अश्रद्धेय-
मिवाभाति सर्वेभ्योप्यधिकं वदन् ॥ ४ ॥ गतिं तत्रैव परमां भोगांश्चैव हि कामितान् ॥ अल्पायासे महत्पुण्यमयं मे संशयो
महान् ॥ ५ ॥ त्वं चापि चिरजीवी सन् बहुद्रष्टा बहुश्रुतः ॥ वेदतत्त्वार्थविच्चैव पुराणानां प्रदर्शकः ॥ ६ ॥ इमं मे संशयं छिंधि मूलप्रामाण्यदर्श-
नात् ॥ मार्कंडेय उवाच ॥ मा कुरुष्वात्र संदेहमश्रद्धां त्यज भूपते ॥ ७ ॥ अश्रद्दधाने तीर्थस्य फलं सम्यक् न जायते ॥ अस्मदुक्तेपि
चाश्रद्धा तव राजन् महामते ॥ ८ ॥ श्रुतिमूलं मया प्रोक्तं श्रुतिमत्र निशामय ॥ सितासिते सरिच्छ्रेष्ठे संगते यत्र वै सदा ॥ ९ ॥ तत्रा-
प्लुता दिवं यांति तनुत्यागेऽश्रुते फलम् ॥ स्वर्गमार्गस्य सोपानं मोक्षनिश्रेणिभूमिका ॥ १० ॥ यत्र वेणी सुखश्रेणी कामानां सदनं महत् ॥
कस्य तत्रापि संदेहो धर्मक्षेत्रे सुखास्पदे ॥ ११ ॥ द्रष्टारः सर्ववेदानां पुराणार्थप्रदर्शकाः ॥ देवर्षयो नारदाद्या योगिनः सनकादयः ॥ १२ ॥
ये सिद्धाः कपिलाद्याश्च कश्यपाद्या महर्षयः ॥ ब्रह्मर्षयोऽमलास्ते च प्रयागं च सिषेविरे ॥ १३ ॥ जामदग्न्यो भरद्वाजो जैगीषव्योऽथ
लोमशः ॥ पाराशरश्च मैत्रेयः कृष्णद्वैपायनोसितः ॥ १४ ॥ कवठो ऋष्यशृंगश्च रैभ्यस्त्रय्यरुणः शुकः ॥ जंबूमार्गनिवासा ये नैमिषार-
ण्यवासिनः ॥ १५ ॥ सैंधवारण्यवासा ये दंडकारण्यवासिनः ॥ कलापग्रामवासाश्च ये वाप्यन्ये महर्षयः ॥ १६ ॥ गत्वा प्रयागं सेवंते तस्य

माहात्म्यवर्णने ॥ कः शक्तस्तीर्थराजस्य संशितः को नु जायते ॥ १७ ॥ कीकसं वा पतति चेन्मर्त्यस्यान्यस्य वा पुनः ॥ निःसृत्य नरकाद्धोरात्स्वर्गं प्राप्नोति शाश्वतम् ॥ १८ ॥ किं पुनः क्लिन्नसर्वांगो वेणीसलिलमज्जनात् ॥ अत्रार्थे यत्पुरावृत्तं तन्निशामय भूपते ॥ १९ ॥ विंध्याटव्यां पुरा कश्चित् व्याधः पक्षिमृगांतकः ॥ लुंठको मार्गमावृत्य ब्रह्मघ्नो दुष्टचेष्टितः ॥ २० ॥ पथिकानां तु संचारं ज्ञात्वा तिष्ठेन्निलीय सः ॥ अकस्मात्संनियत्यैव मात्रामादाय गच्छति ॥ २१ ॥ इत्थं तस्करवृत्त्यैव घातयन् बहुधा जनान् ॥ निघ्नन्नानाविधान् जीवान् पापकर्मातिनिष्ठुरः ॥ २२ ॥ कदाचिद्धनुरादाय स कांडमृगयारतः ॥ महारण्यं संप्रविश्य मृगान्निघ्नन् श्रमातुरः ॥ २३ ॥ व्याघ्रेण सन्निपत्यैव स मार्गे विनिपातितः ॥ यमदूतैस्तथा गत्वा बद्धा नीतो यमक्षयम् ॥ २४ ॥ पीड्यमानोपि बहुधा कशाभिर्यमकिंकरैः ॥ आक्रंदन्प्रापितो घोरे नरके यमशासनात् ॥ २५ ॥ यातनाभिः सुबह्वीभिः शास्यमानः सुदारुणः ॥ रौरवादिषु घोरेषु क्रमशः पात्यते भृशम् ॥ २६ ॥ कुंभीपाके तप्तशैले कालपृष्ठे दुरासदे ॥ सूचीमुखे चासिपत्रे शाल्मलिक्रकचादिषु ॥ २७ ॥ अवटे रुध्यमानो हि पूयशोणितकर्दमे ॥ एवं नानाविधा यामी यातना बहुवत्सरम् ॥ २८ ॥ वर्तते नरके भुंजन्पच्यते स्वेन कर्मणा ॥ अथ तेन यथा याताः केचित्कार्पटिकोत्तमाः ॥ २९ ॥ पल्लीसमीपमागत्य पक्कणानां च पालिकाः ॥ समतिक्रम्य विश्रांता नातिदूरं विशश्रमुः ॥ ३० ॥ विश्वासात्तत्र निक्षिप्य तां मात्रामलसा भृशम् ॥ कश्चित्कार्पटिकश्रेष्ठो मात्रामामुच्य संशयात् ॥ ३१ ॥ मूषकैः किं निकृन्तं स्यात्सुप्तो यत्र स्थितो निशि ॥ द्रष्टव्यमिति संचिंत्य सर्वं ह्यत्र परीक्ष्य च ॥ ३२ ॥ पुनस्तथाविधं कृत्वा विशश्राम क्षणं भुवि ॥

तावन्निद्रान्वितो नेत्रे मुकुलीकृत्य संस्थितः ॥ ३३ ॥ तत्र कश्चिन्मृगव्याधो वृक्षमारुह्य तिष्ठति ॥ तेन दृष्टः संपुटकः पित्रोस्तस्यास्थिसंभृतः ॥ ३४ ॥ द्रव्यस्येति च विज्ञायावरुह्य शनकैस्तरोः ॥ मात्रामुन्मुच्य शनकैर्गृहीत्वा संपुटं ततः ॥ ३५ ॥ अपयातस्त्वरण्यानि यत्रोद्घाटितवान् पृथक् ॥ पिधानं च पृथक्त्यज्य दृष्टवान् वेष्टनादिकम् ॥ ३६ ॥ दृष्ट्वास्थीनि विनिःश्वस्य क्षिप्त्वा च गृहमीयिवान् ॥ संपुटं पट्टचीरं च गृहीत्वा दुःखसंयुतः ॥ ३७ ॥ अहो मया हृतं चौर्यात् संपुटं तत्र चापि हि ॥ मंदभाग्यात्तु आप्तानि तत्रास्थीनि विशेषतः॥ ३८ ॥ दैवमेव परं मन्ये धिक् पौरुषमनर्थकम् ॥ इत्युक्त्वाखेटकार्याय वनमेव प्रतस्थिवान् ॥ ३९ ॥ क्षणं सुप्तोत्थितस्तावत्स च कार्पटिकोत्तमः ॥ मात्रामुन्मोचितां दृष्ट्वा रहितां संपुटेन तु ॥ ४० ॥ आक्रंदद्भूरिदुःखेन रुरोद च पुनः पुनः ॥ आक्रन्दन्तं तथा दृष्ट्वा त्वन्यः कार्पटिकश्च तम् ॥ ४१ ॥ पृष्ठतोभ्यागतः कश्चित्पप्रच्छाश्वासयच्छनैः ॥ किमर्थं रुद्यते साधो केन तेऽपकृतं वद ॥ ४२ ॥ नीतं किंचित्ताडितो वा पीडा काचित्तवांगके ॥ इति पृष्टः सार्थकेन पापेन पथिकस्ततः ॥ ४३ ॥ सर्वं तत्कथयामास यथा संपुटको गतः ॥ ममाभाग्यात्तु पित्रोर्वा हृतः केनापि संपुटः ॥ ४४ ॥ कीकसानां महाभाग किं कुर्यां कुत्र वा व्रजे ॥ कं यामि शरणं तात कुत्र वाहं गवेषये ॥ ४५ ॥ क उपायोऽत्र वै कार्यः प्राप्तावस्थां तु तद्वद ॥ एवं व्याकुलचित्तं तं शोचन्तं पथिकोऽब्रवीत् ॥ ४६ ॥ आगच्छता मया दृष्टः कश्चिद्व्याधो द्विजोत्तम ॥ अपक्रांतः पथानेन त्वत्समीपात्तु सत्वरः ॥ ४७ ॥ अन्वेषयामो गत्वा तमदूरेऽसौ गतोऽभवत् ॥ तर्कयेह महाभाग एहि यामो वयं द्विज॥४८॥ इत्युक्तः प्रपथेनासौ गतो मार्गेण एव च ॥ तेनैव

जग्मतुर्द्विजाः शोधयंतो वनाद्वनम् ॥४९॥ अथैकस्मिन् वनोद्देशे चीराणि ददृशुः किल ॥ तत्पार्श्वं एव चास्थीनि ददृशुः सुबहून्यपि ॥५०॥
चीरखंडानि चिह्नानि विदित्वा स्वानि ते तदा ॥ बहून्यस्थीनि दृष्ट्वा च संशयं प्रतिपेदिरे ॥ ५१ ॥ विज्ञानेन च निश्चित्य स्वीयान्येवेति
पांथिकः ॥ पट्टखंडस्तयोर्णाभिर्जगृहे तन्मतेन च ॥ ५२ ॥ विचिंत्य चीरखंडेन बद्ध्वा तूर्णं समीयतुः ॥ वर्णयंतस्तस्य भाग्यं जहृषुः
पथिकाः परे ॥५३॥ ततः समेत्य ते सर्वे यथागतमगुः शनैः ॥ कथयंतः कथा बह्वीर्नानातीर्थाश्रयाः पृथक्॥५४॥ ततः कतिपयाहोभि
स्तीर्थराजं समागताः ॥ अस्थीनि चिक्षिपुर्वेण्यां सस्नुश्च विधिना ततः ॥ ५५॥ अस्थिप्रक्षेपमात्रेण ततस्तत्पितरोजिरे ॥ नरके ये स्थिताः
पूर्वं ते सर्वे त्रिदिवं ययुः॥ ५६ ॥ त्रिदिवस्थाश्च पितरो ब्रह्मलोकमुपागताः ॥ नरके पच्यमानो यो व्याध उक्तो मया नृप ॥ ५७ ॥ अग्नि-
क्लेदनवत्तस्य तदेवाभवदन्यथा ॥ क्रकचैः पाट्यमानोपि कायभेदं न याति च ॥ ५८ ॥ छेदनं भेदनं चापि संरोधं प्राप न क्वचित् ॥ दृष्ट्वा
तन्महदाश्चर्यं यमदूता यमांतिकम् ॥ ५९॥ गत्वा शशंसुस्तत्सर्वं यमोप्याश्चर्यमाययौ ॥ चित्रगुप्तं च पप्रच्छ सुकृतं वास्य किं भवेत् ॥६०॥
यातनारहितः कस्माज्जातोयं पापजीवितः ॥ चित्रगुप्तोप्युवाचैनं सुकृतं नास्य वेद्म्यहम् ॥ ६१ ॥ बाल्यादारभ्य जीवानां घातनं कृतवानसौ ॥
हिंसिता बहवो विप्रा लुंठिता बहवो जनाः ॥ ६२ ॥ धनं चापि हृतं चौर्यात्पथिकानां महात्मनाम् ॥ धर्मवार्तां न जानाति गोघ्नोयं निरप
त्रपः ॥६३॥ कस्मादस्य च जायंते नरकाः शीतलाः सुखाः ॥ एतास्मिन्नंतरे ब्रह्मा सर्वेषां यः पितामहः॥६४॥ विमानं प्रेषयामास स्वगणैश्च
समन्वितम् ॥ नेतुं स्वलोकं तं व्याधं शिक्षयित्वेति चेति च ॥६५॥ गत्वा ते त्वरितं तत्र शासनं ब्रह्मणो वदन् ॥ यमोप्युवाच तान् देवान्

कथमेनं तु पापिनम् ॥६६॥ स्वलोकं नेतुमभ्यग्रमहेथागत्य सत्तमाः ॥ तमूचुर्ब्रह्मणस्तेपि किंकराः शृणु मानद ॥६७॥ वेणीजलेऽस्य चास्थीनि पतितान्यभवन्प्रभो ॥ पूर्वं कृतानि पापानि तत्क्षणाद्विलयं ययुः ॥ ६८ ॥ निष्पापोऽयं च संजातः सत्यलोकं प्रयास्यति ॥ व्यापादितोयं व्याघ्रेण तस्यास्थीनि च वै ततः ॥६९॥ पतितानि च तत्रैव कस्याचित्पथिकस्य हि ॥ व्याधेन संपुटास्थीनि नीत्वा क्षितानि सर्वशः ॥७०॥ संपुटो वसुसंपूर्ण इत्यादायापहृत्य च ॥ उद्घाट्यास्थीनि दृष्ट्वा च निःश्वस्योच्चैश्च चिक्षिपे ॥ ७१ ॥ गवेषयंतश्चास्थीनि संप्राप्य परिगृह्य च ॥ सहितैः सहितान्येव वेण्यां निक्षिप्तवान् द्विजः ॥ ७२ ॥ वेणीजलस्य संस्पर्शात् सर्वथा क्षीणपातकः ॥ नेतव्योयं विभोः पार्श्वे भाग्यवानिति निश्चितम् ॥ ७३ ॥ इत्युक्त्वा तं समारोप्य विमाने सूर्यसंनिभे ॥ सत्यलोकाय निन्युस्ते विधात्राज्ञापुरस्कृताः ॥ ७४ ॥ एवं परमपापिष्ठो व्याधोप्यामिषभोजनः ॥ वेण्यां प्लुतास्थिकः शुद्धः क्षीणपापो दिवं गतः ॥ ७५ ॥ इति श्रीमत्स्यपुराणे प्रयागमाहात्म्येअष्टमोऽध्यायः ॥ ८ ॥ मार्कंडेय उवाच ॥ अन्यच्च शृणु राजर्षे यथादृष्टं यथाश्रुतम् ॥ कृत्वा प्रमाणशास्त्रं तु युज्यते योगमात्मनः ॥ १ ॥ क्लिश्यते केवलं तस्मान्न तत्फलमवाप्नुते ॥ जन्मांतरसहस्रेण योगो लभ्येत वा न वा ॥ २ ॥ दानानि दत्वा बहुशो ब्राह्मणेभ्यो विधिः क्रमात् ॥ कृच्छ्रचांद्रायणादीनि व्रतानि बहुशस्तथा ॥३॥ अटित्वा सर्वतीर्थानि पुण्यान्यायतनानि च ॥ कृच्छ्रेण लभ्यते यच्च तल्लभ्यं तीर्थराजतः ॥४॥ स्नानमात्रेण राजेंद्र फलं त्रिदशदुर्लभम् ॥ मकरस्थे गुरौ माघे मकरस्थे दिवाकरे ॥ ५ ॥ तत्फलं समवाप्नोति सद्य एव नरोत्तमः ॥ अतिप्रशस्तो योगोऽयं बहुपुण्यैरवाप्यते ॥ ६ ॥ अर्धोदयस्तथा योगस्तीर्थराजे सुदुर्लभः ॥ योगातियोगो ह्युक्तोयं पुराणज्ञैरनुत्तमः ॥ ७॥

अनेकविघ्नसंकीर्णः प्राप्यते पुण्यगौरवात् ॥ विचार्यैवं सुबहुशो दिवि गायंति देवताः ॥ ८ ॥ अमार्कश्रवणं चैव व्यतीपाते कुहूदिने ॥
माघे मासि गुरौ सूर्ये मकरस्थे महाफले ॥ ९ ॥ अनेकपुण्यसंभारैरयं योगो ह्यवाप्यते ॥ विशेषात्तीर्थराजे तु फलदे सद्य एव हि ॥ १० ॥
त्रिदिवेनेह लब्धेन किमस्माकं फलं भवेत् ॥ यत्पूर्वसंचितस्यापि हानिर्भवति केवलम् ॥ ११ ॥ मनुष्यलोके जन्म स्याद्यदि नस्तेन
सत्वरम् ॥ प्रयागं प्राप्य योगेस्मिन् स्नानमात्रेण तत्फलम् ॥ १२ ॥ योगाद्धि दुर्लभं यच्च येन स्यात्परमं पदम् ॥ इति नित्यं हि शोचंति
देवाः स्वर्गैकसौप्यलम् ॥ १३ ॥ तस्मात्त्वमपि भूपाल श्रद्धया स्नानमाचर ॥ प्रयागे ह्यमृतस्यंदे सर्वकामकरंडके ॥ १४ ॥ प्रधाने हेतुमा-
कांक्षन् चतुर्वर्गैकसाधने ॥ यथा सर्वेषु वर्णेषु सर्वत्रैव च दृश्यते ॥ १५ ॥ ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥ तद्वत्प्रयागती-
र्थात्तु तीर्थमन्यन्न विद्यते ॥ १६ ॥ ब्रह्म चैव च सर्वेषामाधारः परमाश्रयः ॥ कामानां परमाधारः सर्वश्रेयः साम्प्यते ॥ १७ ॥ यत्र तत्र
महच्चित्रं किं वा पापस्य संक्षये ॥ सर्वेषां चैव भूतानां ब्राह्मणः श्रेयसां वरः ॥ १८ ॥ तथा सर्वेषु तीर्थेषु तीर्थराजः प्रशस्यते ॥ यथा सर्वेषु
देवेषु भगवान् यज्ञपूरुषः ॥ १९ ॥ यथा सर्वेषु मंत्रेषु गायत्री चोत्तमा तथा ॥ यथा च सर्वयज्ञेषु जपयज्ञः परः स्मृतः ॥ २० ॥ तथैव
सर्वतीर्थेषु प्रयागः परमः स्मृतः ॥ सामवेदो हि वेदानां परमो यद्वदुच्यते ॥ २१ ॥ तथैव तीर्थराजानमेनमाहुर्मनीषिणः ॥ इंद्रियाणां
मनो यद्वद्वृक्षाण पिप्पलो यथा ॥ २२ ॥ नदीनां च यथा गंगा तथैवेदं महत्फलम् ॥ सत्यलोके स्थितो धाता प्रयागं स्मरते
सदा ॥ २३ ॥ अतएव निजं रूपं द्वेधाकृत्वाऽत्र संस्थितः ॥ कदाचिच्चलते नैवस्थाणुवत्स्थिरतांगतः ॥ २४ ॥ अनेनैवानुमानेन बुध्यस्व

त्वं युधिष्ठिर ॥ प्रयागादधिकं नास्ति यथावत्कथितं तव ॥ २५ ॥ युधिष्ठिर उवाच ॥ उक्तानि सर्वतीर्थानि यमुनाकूलगानि ह ॥ गंगाकूलगतानि स्युस्तानि तीर्थानि मे वद ॥ २६ ॥ मार्कंडेय उवाच ॥ प्रथमं वटमूले तु तीर्थं सारस्वतं परम् ॥ तत्र स्नातो नरो याति लोकं सारस्वतं ध्रुवम् ॥ २७ ॥ ततोऽत्रितीर्थं विख्यातं सिद्धिदं परमं महत् ॥ यत्रात्रिरनुसूया च समाराध्या च भक्तितः ॥ २८ ॥ कर्तारं सर्वभूतानां धातारं परमेश्वरम् ॥ साधारण्येन संराध्य ब्रह्मरुद्रहरीन् परान् ॥ २९ ॥ पुत्रान् लेभे महाप्राज्ञांस्त्रींश्च त्रिभ्यो यशस्विनः ॥ सोमं दुर्वाससं चापि दत्तात्रेयमितीश्वरान् ॥ ३० ॥ अंशभूतास्त्रयाणां च देवानां भक्तवत्सलान् ॥ तत्र स्नात्वा पुत्रकामः पुत्रं प्राप्नोत्यसंशयम् ॥ ३१ ॥ ततो बृहस्पतेस्तीर्थं यत्र लेभे परां गतिम् ॥ गुरुत्वं सर्वदेवानामध्यगच्छत सान्वयः ॥ ३२ ॥ तत्र स्नात्वा समाप्नोति विद्यां यामभिकांक्षति ॥ ततः परं महत्तीर्थं विश्वामित्रस्य शर्मदम् ॥ ३३ ॥ यत्र लेभे क्षत्रियोपि ब्राह्मण्यमतिदुर्लभम् ॥ यत्र स्नात्वा नरो याति गायत्रीजाप्यजं फलम् ॥ ३४ ॥ शक्रतीर्थं ततो गत्वा स्नात्वा संतर्प्य वै पितॄन् ॥ पितामहानिंद्रलोकं संप्रापयति सत्वरम् ॥ ३५ ॥ यत्र मुक्तः सहस्राक्षः शापाद्गौतमसम्भवात् ॥ तत्र स्नात्वा नरः पूतोऽगम्यागमनसंभवात् ॥ ३६ ॥ मुच्यते पातकात् सर्वात्स्वर्गलोकं च विंदति ॥ दशाश्वमेधिकं तीर्थं सर्वयज्ञफलप्रदम् ॥ ३७ ॥ ब्रह्मणा यत्र विहिता वाजिमेधा दश प्रभो ॥ तत्तीर्थं परमं पुण्यं सर्वकामफलप्रदम् ॥ ३८ ॥ यत्र स्नात्वा सकृन्मर्त्यो विधिना भारतोत्तम ॥ यज्ञाकरणजातपापान्मुच्यते नात्र संशयः ॥ ३९ ॥ प्राणांस्तत्र परित्यज्य ब्रह्मलोकं च गच्छति ॥ अतः परं प्रवक्ष्यामि पूर्वकूलस्थितान्यपि ॥ ४० ॥ ऐलतीर्थमिति ख्यातं

यत्र राजा पुरूरवाः ॥ कुरूपं च स्वमुत्सृज्य सुरूपोऽभवदच्युतः ॥ ४१ ॥ तत्र स्नात्वा नरो राजन् सुरूपो जायते ध्रुवम् ॥ नलतीर्थं ततः पुण्यं पुण्यश्लोकस्य धीमतः ॥ ४२ ॥ वीरसेनसुतो राजा स्वं राज्यं यत्र लब्धवान् ॥ तत्र स्नात्वा हृतं राज्यं परैः स्वं च प्रपद्यते ॥ ४३ ॥ सर्वपापविनिर्मुक्तः कलिदोषैर्न बाध्यते ॥ उर्वशीतीर्थमाख्यातं ततः परमपावनम् ॥ ४४ ॥ यत्र शापाद्विनिर्मुक्ता उर्वशी स्वर्गमेव च ॥ पुनः स्वं स्थानमासाद्य मोदते पूर्ववन्नृप ॥ ४५ ॥ तत्र स्नात्वोर्वशीलोकं नरः प्राप्नोत्यनुत्तमम् ॥ ततस्त्वरुंधतीतीर्थं त्रिषु लोकेषु विश्रुतम् ॥ ४६ ॥ यत्र स्नात्वा मुनीनां वै प्राप्नुयाल्लोकमुत्तमम् ॥ ततः परं यज्ञतीर्थं त्रिषु लोकेषु विश्रुतम् ॥ ४७ ॥ तत्र स्नात्वा नरः सर्वयज्ञानां लभते फलम् ॥ देहावसानं संप्राप्य ब्रह्मलोकं च गच्छति ॥ ४८ ॥ अन्यान्यपि च तीर्थानि शतशोथ सहस्रशः ॥ तीर्थराजं समाश्रित्य सर्वान्कामान्महाफलान् ॥ ४९ ॥ प्रयच्छंति नृणां स्नानान्महिमानं तु को वदेत् ॥ ५० ॥ इति श्रीमत्स्यपुराणे प्रयागमाहात्म्ये नवमोऽध्यायः ॥ ९ ॥ युधिष्ठिर उवाच ॥ प्रयागे पुण्यकरणात्प्राप्यते मतिरुत्तमा ॥ यदि पापं तत्र कुर्यादज्ञानाज्ज्ञानतोपि वा ॥ १ ॥ कां गतिं समवाप्नोति कथयैतन्महामुने ॥ मार्कंडेय उवाच ॥ यथा पुण्यकृतां तत्र जायते सुमहत्फलम् ॥ २ ॥ पापकर्मपराणां च तथैव स्यात्फलं महत् ॥ तैलबिन्दुर्जले यद्वन्निक्षिप्तः सकलं जलम् ॥ ३ ॥ व्याप्नोति पातकं तद्वत्तीर्थराजे सुदुस्तरम् ॥ नरके स पतेत्तीव्रे भुंजन्वै यमयातनाः ॥ ४ ॥ तीर्थे न पातकं कार्यं नियमं परमं चरेत् ॥ सावधानैरवस्थेयं यथा पापं न जायते ॥ ५ ॥ अनेकयुगपर्यन्त तस्य नो निष्कृतिर्भवेत ॥ पुण्यकृत्स्वर्गमाप्नोति पापकृन्नरकं व्रजेत् ॥ ६ ॥ तदेव यदि तीर्थेषु कृतमक्षय्यतां व्रजेत ॥ करोति

च्चन्नरः पापं तदा तीर्थाद्बहिर्व्रजेत् ॥ ७ ॥ अधोधो गच्छति नरस्तीर्थे पापं यथा भवेत् ॥ न निष्कृतिर्युगांतेपि तीर्थे तस्मात्परित्यजेत् ॥८॥
अपि कामातुरो जंतुरेकां त्यजति मातरम् ॥ प्रयागमेकमेवं तु पापकर्ता परित्यजेत् ॥ ९ ॥ अन्यत्र यत्कृतं पापं प्रयागं प्राप्य नश्यति ॥
प्रयागे यत्कृतं पापं वज्रलेपो भविष्यति ॥ १० ॥ नान्यत्र तत् क्षयं याति प्रायश्चित्तशतैरपि ॥ युधिष्ठिर उवाच ॥ प्रयागकृतपापानां कथं
वा निष्कृतिर्भवेत् ॥ ११॥ एतन्मे वद तत्त्वेन यथावदनुपृच्छतः ॥ मार्कंडेय उवाच ॥ राजन् सम्यक्कृतः प्रश्नस्त्वया लोकोपकारिणा ॥ १२॥
शृणु तत्ते प्रवक्ष्यामि यथा ब्रह्ममुखाच्छ्रुतम् ॥ प्रमादादप्रमादाद्वा प्रयागे यदघं भवेत् ॥ १३ ॥ यथा तन्निष्कृतिर्दृष्टा तां निबोध युधिष्ठिर ॥
अज्ञानेन कृतानि स्युः पातकानीह यानि तु ॥ १४॥ कृच्छ्रचांद्रायणाद्यैस्तु व्रतैर्नानाविधैरपि ॥ माघस्नानेन तत्रैव तिलपात्रप्रदानतः ॥१५॥
जपैर्होमैस्तथा दानैरनुतापो यदा भवेत् ॥ ज्ञानात् कृतानि पापानि याचितेभ्यस्तु पापकृत् ॥ १६ ॥ करीषाग्निं प्रविश्यैव तथा प्रायोपवेश-
नात् ॥ वेण्यां प्रविश्य वा सद्यो देहान्तादेव शुध्यति ॥ १७॥ युधिष्ठिर उवाच ॥ श्रुत्वेदं त्वन्मुखाद्विप्र नष्टो मे संशयो महान् ॥ प्रसन्नं मे
मनो जातं सान्निधानात्तवैव हि ॥ १८ ॥ एकं त्वयो कामिच्छामि श्रोतुं भार्गवसत्तम ॥ प्राप्यते केन वा स्वर्गो दानेन तपसापि वा ॥ १९ ॥
इष्टापूर्तेन वा विप्र भोगान्नानाविधानपि ॥ तारतम्यफलं वापि जायते केन तद्वद ॥ २० ॥ दानैर्व्रतैश्च तीर्थैश्च इष्टापूर्तैस्तथा जपैः ॥ होमैर्वा
देवपूजाभिर्ब्राह्मणानां च तर्पणैः ॥ २१ ॥ तन्मे वद सुनिश्चित्य सर्वं जानाति यद्भवान् ॥ मार्कंडेय उवाच ॥ सर्वं त्वयोक्तं स्वर्गस्य कारणं
विद्धि भूपते ॥ २२ ॥ सर्वैश्च प्राप्यते स्वर्गः पापं यदि न जायते ॥ प्रयातुः पुण्यतः स्वर्गे प्रतिबंधः प्रजायते ॥ २३ ॥ दानेन भोगमाप्नोति

दानेनैव सुखी भवेत ॥ यन्न दत्तं द्विजातिभ्यः स्वर्गतः प्राप्नुयान्न तत् ॥ २४ ॥ तस्मात्तीर्थेषु पात्राय दद्यादेव स्वशक्तितः ॥ यद्यत् प्रियतमं लोके तत्तद्दद्याद्द्विजातिषु ॥२५॥ अन्नं वस्त्रं च गामश्वं भोगानुच्चावचांस्तथा ॥ यदेव न द्विजे दत्तं तत्स्वर्गेपि न लभ्यते ॥२६॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ श्वेतकेतुरभूद्राजा पुरा भरतसत्तम ॥ २७ ॥ धर्मात्मा संयतात्मा च दाता ब्राह्मणपूजकः ॥ यज्ञशीलः प्रजापालो देवताराधने परः ॥२८॥ गोभूहिरण्यरत्नानि वस्त्राश्वगजभूरुहाः ॥ अनेकशो द्विजातिभ्यस्तेन दत्ता महात्मना ॥२९॥ अथ कालेन बहुना राजा कालवशं गतः ॥ दिव्यं विमानमारुह्य गतो ब्रह्मपुरं प्रति ॥ ३० ॥ नानाभोगसमायुक्तो गंधर्वाप्सरसां गणैः ॥ गीयमानोऽनुगैः सार्धं रेमे तत्र मुदान्वितः ॥ ३१ ॥ रमणीयेषु देशेषु देवोद्यानेषु भूरिशः ॥ एवं स भोगवान् राजा स्वर्गतोपि युधिष्ठिर ॥ ३२ ॥ क्षुधया पीडितो नित्यं तदा चिंतामुपागतः ॥ यदा सोढुमवस्थातुं नाशक्नोद्व्याकुलेंद्रियः ॥ ३३ ॥ तदापृच्छद्विधातारं विनयानतकंधरः ॥ प्राप्तः स्वर्गमहं देव दिव्यभोगसमन्वितः ॥ ३४ ॥ पीडितः क्षुधया नित्यं संतप्यामि सुदुःखितः ॥ कथं क्षुधा निवर्तेत तन्मे ब्रूहि कृपां कुरु ॥ ३५ ॥ ततोऽब्रवीद्विधाता च राजानममितद्युतिम् ॥ त्वया दत्तानि दानानि सर्वाण्येव नृपोत्तम ॥ ३६ ॥ अन्नदानं तु न कृतं तेन त्वं पीड्यसे क्षुधा ॥ पोषितं स्वशरीरं यन्मिष्टान्नैः केवलैरपि ॥ ३७ ॥ भोजिता न द्विजा भक्त्या दीनांधकृपणा अपि ॥ न तर्पिताः किमन्नेन द्रव्यमेवाखिलार्थदम् ॥ ३८ ॥ द्विजैः संबोधितोपि त्वमन्नं नैव ददासि यत् ॥ अहं सर्वं विजानामि ज्ञाता मत्तो न कश्चन ॥ ३९ ॥ अहंकारेण संयुक्तस्तथा कथयसे परम् ॥ परं तत्वं न जानासि अन्नदानेन यत्फलम् ॥ ४० ॥ अन्नाद्भवंति भूतानि अन्ने प्राणाः प्रतिष्ठिताः ॥ अन्नदः प्राणदस्त-

स्मादन्नदः सुखमाप्नुते ॥ ४१ ॥ तस्मादन्नं प्रदातव्यं शरीरं चान्नसंभवम् ॥ राजन् क्षुधानिवृत्त्यर्थं देहं भक्षय नित्यशः ॥ ४२ ॥ पोषितं यच्छरीरं ते भविष्यति तथैव तत् ॥ प्रत्यहं भक्षितमपि पुनः पुष्टं भविष्यति ॥ ४३ ॥ क्षुधानिवृत्तये तुभ्यमन्यत्किंचिन्न विद्यते ॥ एवं स ब्रह्मणादिष्टो भक्षयित्वा कलेवरम् ॥ ४४ ॥ पुनर्याति स्वकं स्थानं प्रत्यहं बहुवासरम् ॥ कदाचित्तेन मार्गेण अगस्त्यो भगवानृषिः ॥ ४५ ॥ प्रयागं स्नातुमागच्छद्ददर्श पथि तं नृपम् ॥ विमानेनार्कवर्णेन भ्राजमानं स्वतेजसा ॥ ४६ ॥ अवरुह्य विमानात्स्वाद्भक्षयंतं कलेवरम् ॥ आश्चर्यं परमं प्राप्य पप्रच्छ नृपसत्तमम् ॥ ४७ ॥ अहो स्वर्गं भवानेत्य दिव्यरूपसमन्वितः ॥ अनेकभोगसंयुक्तः किं करोषि जुगुप्सितम् ॥ ४८ ॥ बीभत्सं खलु ते कस्मादेवं कर्म समास्थितम् ॥ को भवांस्तेजसा पूर्णस्तन्मे शंसितुमर्हसि ॥ ४९ ॥ मुनेर्वाक्यं समाकर्ण्य श्वेतकेतुः सुदुःखितः ॥ प्रणिपत्य मुनिश्रेष्ठं प्रत्युवाच सविस्मयम् ॥ ५० ॥ आकर्णय मुनिश्रेष्ठ योस्मि यत्कर्म यादृशम् ॥ श्वेतकेतुरिति ख्यातो राजाहमभवं पुरा ॥ ५१ ॥ अग्नयः सुहुता देवाः पितरश्चैव तर्पिताः ॥ दक्षिणाभिरनेकाभीरत्नैश्च विविधैरपि ॥ ५२ ॥ ब्राह्मणास्तोषिता नित्यं प्रजानां परिपालनात् ॥ अहंकारविमूढेन नान्नदानं कृतं मया ॥ ५३ ॥ क्षुधया पीडितस्तेन स्वर्गं प्राप्यापि चाक्षयम् ॥ विज्ञतश्च ततो ब्रह्मा मामुवाच पितामहः ॥ ५४ ॥ प्रत्यहं त्वं भुवं गत्वा भक्षयस्व कलेवरम् ॥ तव क्षुधाऽन्यथा नाशं न यास्यति कथंचन ॥ ५५ ॥ एवं ब्रह्मण आदेशान्मयेदं कर्म गर्हितम् ॥ क्रियते हि मुनिश्रेष्ठ स्वापराधो मम त्वयम् ॥ ५६ ॥ इदानीं मम भाग्येन संप्राप्तं दर्शनं तव ॥ यथा मम क्षुधापीडा न भवेत्त्वं तथा कुरु ॥ ५७ ॥ समुद्रः प्राशितः पूर्वं विंध्य

वृद्धिर्निवारिता ॥ अतिदैवं तु ते कर्म तव शक्तिर्दुरत्यया ॥ ५८ ॥ शरणं त्वां प्रपन्नोस्मि कृपया मां समुद्धर ॥ इति संप्रार्थितो राज्ञा महर्षिस्तुष्टमानसः ॥ ५९ ॥ उवाच मधुरं वाक्यं शरणागतवत्सलः ॥ ब्रह्मणा न कृतं यत्ते मम का शक्तिरूर्जिता ॥ ६० ॥ तथापि तव बीभत्सं दृष्ट्वा कर्म सुगर्हितम् ॥ घृणा मे जायते तस्मान्निष्कृतिं तेंहसः शृणु ॥ ६१ ॥ एह्यागच्छ मया सार्द्धं प्रयागं प्रति मानद ॥ निष्कृतिं ते करिष्यामि स्वस्यैव तपसो बलात् ॥ ६२ ॥ प्रयागस्तीर्थराजोऽयं सर्वकामफलप्रदः ॥ कथं न कुर्यात्ते काममित्युक्त्वाभ्यगमत्ततः ॥ ६३ ॥ ततो गत्वा प्रयागं तु स मुनिः शंसितव्रतः ॥ त्रिवेण्यां स्नापयित्वा तं राजानममितद्युतिम् ॥ ६४ ॥ पुनः प्रोवाच राजानमन्नदानस्य निष्क्रयः ॥ प्रयागे द्विजवर्याय दातव्यः फलमिच्छता ॥ ६५ ॥ नादत्तमुपतिष्ठेत कल्पकोटिशतैरपि ॥ ततः कंकणमुत्तार्य करे कृत्वाब्रवीन्मुनिम् ॥ ६६ ॥ संकल्पय विधानेन गृहीष्वोद्धर मां विभो ॥ ततोनुज्ञामनुप्राप्य ददौ तस्मै स्वकंकणम् ॥ ६७ ॥ अन्नस्य निष्क्रयं कृत्वा अगस्त्यमुनये तदा ॥ ततोनुज्ञामवाप्यैनं प्रणम्य च पुनः पुनः ॥ ६८ ॥ ययौ स्वेष्टगतिं सद्यो विमानेन सुवर्चसा ॥ अंतर्हितं शरीरं तत्तत्क्षणादेव सुव्रत ॥ ६९ ॥ इत्थंप्रभावं तत्तीर्थं तव प्रोक्तं मयानघ ॥ दानानां पुष्टिरुक्ता च तव राजर्षिसत्तम ॥ ७० ॥ कथयिष्यामि ते राजन् यदन्यत्प्रष्टुमिच्छसि ॥ ७१ ॥ इति श्रीम० प्रया० दशमोध्यायः ॥ १० ॥ युधिष्ठिर उवाच ॥ यथायथा कथयसि महिमानं महत्तरम् ॥ तथातथा मुनिश्रेष्ठ प्रसन्नं हृदयं मम ॥ १ ॥ तव वाक्कर्णपयियूषमास्वाद्य हृदयं मम ॥ नातितृप्तं भवति भो यथा वै जुषतोऽमृतम् ॥ २ ॥ संश्रावयान्यदपि मे ब्रह्मादिप्रतिभाषितम् ॥ मुने प्रयागमाहात्म्यं कृपया वद मां प्रति ॥ ३ ॥ दृष्टं

यद्यत्त्वया तत्तु न श्रुतं केनचित्क्वचित् ॥ तस्मात्पृच्छामि सर्वज्ञं सर्वसंदेहनाशनम् ॥ ४ ॥ मार्कंडेय उवाच ॥ शृणु राजन्महाबाहो माहात्म्यं पुनरेव तु ॥ नैमिषं पुष्करं चैव गोकर्णं सिंधुसागरम् ॥ ५ ॥ गया च धेनुकं चैव गंगासागरसंगमः ॥ अन्यानि चैव तीर्थानि ये च पुण्याः शिलोच्चयाः ॥ ६ ॥ दशतीर्थसहस्राणि त्रिंशत्कोटयस्तथापराः ॥ प्रयागे संस्थिता नित्यमेवमाहुर्महर्षयः ॥ ७ ॥ त्रीणि चाप्यग्निकुंडानि येषां मध्ये तु जाह्नवी ॥ प्रयागादभिनिष्क्रांता सर्वतीर्थपुरस्कृता ॥ ८ ॥ तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥ यमुना गंगया सार्धं संगता लोकभाविनी ॥ ९ ॥ गंगायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् ॥ प्रयागं राजशार्दूल तस्य साम्यं किमुद्वदेत् ॥ १० ॥ तिस्रः कोटयोर्द्धकोटिश्च तीर्थानां वायुरब्रवीत् ॥ दिवि भुव्यन्तारिक्षे च गंगायां तानि सर्वशः ॥ ११ ॥ प्रयागं च प्रतिष्ठानं कंबलाश्वतरौ तथा ॥ भोगवत्यथ या चैव वेदी प्रोक्ता प्रयागके ॥ १२ ॥ तत्र मंत्राश्च वेदाश्च मूर्तिमंतो युधिष्ठिर ॥ प्रजापतिमुपासंते मुनयश्च तपोधनाः ॥ १३ ॥ यजंते क्रतुभिर्देवास्तथा चक्रधरा नृपाः ॥ तस्मात्पुण्यतमं नास्ति त्रिषु लोकेषु किंचन ॥ १४ ॥ प्रभावात्तीर्थराजस्य महत्त्वात्तीर्थराजतः ॥ यत्र गंगा महाभागा स देशस्ते तपोधन ॥ १५ ॥ सिद्धक्षेत्रं तु तज्ज्ञेयं यत्र गंगा समाश्रिता ॥ इदं ज्ञात्वा जपेत्कर्णे पुत्रस्य सुहृदस्तथा ॥ १६ ॥ इदं पुण्यमिदं स्वर्ग्यमिदं मेध्यमिदं सुखम् ॥ सुशिष्यस्यानुरक्तस्य गोप्यमत्यंतमुत्तमम् ॥ १७ ॥ इदं पुण्यमिदं रम्यं पावनं धर्म्यमुत्तमम् ॥ महर्षीणामिदं पुण्यं सर्वपापप्रमोचनम् ॥ १८ ॥ अधीते चेद्द्विजोप्येतं निर्मलत्वमवाप्नुयात ॥ यस्त्विदं शृणुयान्नित्यं तीर्थं पुण्यं सदा शुचि ॥ १९ ॥ जातिस्मरत्वं लभते नाकपृष्ठे च मोदते ॥ प्राप्यंते तानि तीर्थानि

सद्भिः शिष्टानुदर्शिभिः ॥ २० ॥ स्नाहि तीर्थेषु कौरव्य न च वक्रगतिर्भव ॥ इदं विश्वं यदा सर्वं कल्पांते संहरत्यजः ॥ २१ ॥ तदा
नश्यति तत्सर्वं प्रयागं नैव नश्यति ॥ वटो यस्तत्र तस्यैव शाखायां बालरूपधृक् ॥२२॥ शेते पत्रपुटे देवो मया दृष्टो महाद्भुतः ॥ एकीभूय
समुद्रास्तु प्लावयंति भुवस्तलम् ॥२३॥ तत्र मज्जंस्तरंगैस्तु प्रोह्यमानं समन्ततः ॥ दृष्टवानस्मि तं बालं निकटे गतवानहम् ॥ २५ ॥ प्रष्टुं
किंचिदुपक्रांतः समाश्वास्य भयार्दितः ॥ तावत्तस्य हि बालस्य श्वासेनैवोदरं गतः ॥२५॥ तत्र दृष्ट्वा जगत्सर्वमाश्वस्तः पूर्ववत्पुनः ॥ अनेक-
चित्रं तत्रैव स्वाश्रमं प्राप्य तस्थिवान् ॥२६॥ पुनस्तस्यैव निःश्वासात्पतितः प्रलयार्णवे ॥ संभ्रांतोस्मि महाग्राहैर्मकरैश्च तिमिंगिलैः ॥२७॥
ग्रस्यमान इव त्रस्यन् कंपमानः पुनः पुनः ॥ एवं तु बहुशो राजन्दृष्टवानस्मि तं वटे ॥ २८ ॥ युधिष्ठिर उवाच ॥ भूम्याः ककुद्वत् दृष्टः
प्रयागोपि तदातदा ॥ न नाशः प्रलयेप्यस्ति तस्य क्षेत्रस्य कर्हिचित् ॥ २९ ॥ कस्मात्तिष्ठंति ते देवा ब्रह्मविष्णुमहेश्वराः ॥ सह देवैः
प्रयागेस्मिन्कल्पांतेपि त्यजंति न ॥ ३० ॥ मार्कंडेय उवाच ॥ प्रयागे निवसंत्येते ब्रह्मविष्णुमहेश्वराः ॥ कारणं तत्र वक्ष्यामि शृणु तत्त्वं
युधिष्ठिर ॥ ३१ ॥ पंचयोजनविस्तीर्णं प्रयागस्य हि मंडलम् ॥ तिष्ठंति रक्षणार्थाय पापकर्मनिवारकाः ॥ ३२ ॥ उत्तरेण प्रतिष्ठानाच्छा-
ल्मली प्रतितिष्ठति ॥ ब्रह्मा हि तेन रूपेण प्रयागं रक्षते सदा ॥ ३३ ॥ महेश्वरो वटो भूत्वा तिष्ठते परमेश्वरः ॥ विष्णुर्माधवरूपेण प्रयागं
परिरक्षति ॥ ३४ ॥ ततो देवाश्च गंधर्वाः सिद्धाश्च परमर्षयः ॥ रक्षंति मंडलं नित्यं पापकर्मनिवारकाः ॥ ३५ ॥ तस्मिन् जुह्वन् स्वकं देहं
नरकं नैव पश्यति ॥ एष ब्रह्मा च विष्णुश्च प्रयागे स महेश्वरः ॥ ३६ ॥ सप्तद्वीपाः समुद्राश्च पर्वताश्च महीतले ॥ ध्रियमाणाश्च तिष्ठंति

यावदाभूतसंप्लवम् ॥ ३७ ॥ ये चान्ये बहवः सर्वे तिष्ठंति च युधिष्ठिर ॥ पृथिवीतलमाश्रित्य निर्मिता दैवतैस्त्रिभिः ॥ ३८ ॥
प्रजापतेरिदं क्षेत्रं प्रयागमिति विश्रुतम् ॥ एतत्पुण्यं पवित्रं च प्रयागं च युधिष्ठिर ॥ ३९ ॥ तस्माद्व्रजस्व कौन्तेय
प्रयागं परमार्चितम् ॥ तत्र स्नात्वा महाभाग हुत्वा दत्वा च भूरिशः ॥ ४० ॥ भ्रातृभिः सहितः पार्थ सर्वपापं प्रणश्यति ॥
गुरूणां चापि मित्राणां भ्रातृणां च वधात्कृतम् ॥ ४१ ॥ तस्मात्पापान्मोहमूलाच्छंकसे परितप्यसे ॥ विलयं यास्यति क्षिप्रं त-
त्सर्वं नान्यथा क्वचित् ॥ ४२ ॥ कुरु राज्यं महाराज क्षत्रियोसि विशेषतः ॥ यश्च ते संचयो नित्यं हृदये परिवर्तते ॥ ४३ ॥ प्रसन्ने
हृदये जाते शोकस्तेन चिरादिह ॥ नश्यत्यसंशयं राजन् प्रयागस्य प्रभावतः ॥ ४४ ॥ श्रीसूत उवाच ॥ एवमुक्तो महातेजा मार्कंडेयेन
धीमता ॥ भ्रातृभिः सहितः सर्वैर्ज्ञातिभिः सहितश्च तैः ॥ ४५ ॥ कृष्णेन च हताज्ञानः पुरा भीष्मेण बोधितः ॥ व्यासधौम्यादिभिश्चोक्तो
बोधितः प्रियकारकैः ॥ ४६ ॥ अभिषिक्तो द्विजैः सार्धं कृष्णेन च महात्मना ॥ तान् सर्वान् पूजयामास ब्राह्मणांश्चाप्यतर्पयत् ॥ ४७ ॥
इति श्रीमत्स्य० प्रया० एकादशोध्यायः ॥ ११ ॥ शौनक उवाच ॥ राज्येऽभिषिक्तो धर्मात्मा भ्रातृभिः सहितस्ततः ॥ गतः प्रयागमथ कैः
कैर्वा सह महाद्युतिः ॥ १ ॥ तन्मे कथय धर्मज्ञ कथं वास्य मनो भवेत् ॥ श्रीसूत उवाच ॥ यथा स राजा ननु पांडवेयो राज्यं समृद्धं
हतकंटकं तत् ॥ २ ॥ प्राप्यार्यमित्राणि समिद्धतेजाः स सांत्वयित्वा स्वजनं च सम्यक् ॥ अथो मुहूर्ते सुदिने विचिंत्य द्विजैः कृतस्वस्त्ययनो
महात्मा ॥ ३ ॥ कुंती च कृष्णा च पुरानुयानैः संप्रेष्य विप्रानुमतो महात्मा ॥ भीमार्जुनाद्यैः सहितोनुरक्तैः संप्रस्थितः श्रीपतिना

सहैव ॥ ४ ॥ मृकण्डपुत्रेण तथा स्वभृत्यैर्यात्रानुकूलानुविधायिभिश्च ॥ प्राप्तः प्रयागं पुरतो विलोक्य मृकंडपुत्रस्तमुवाच धर्मम् ॥ ५ ॥ पश्य प्रयागं ननु तीर्थराजं ब्रह्मादिभिः सेवितमादरेण ॥ संसेव्यते देवगणैः सदैवगंधर्वसिद्धैर्मुनिभिस्तथैव ॥ ६ ॥ सितासिते यत्रयनद्वयीव नद्यौ तृतीयं तु सरस्वतीव ॥ वटो जटाजूट इव प्रयागं रुद्रो जपन्नेष पलायिताघः ॥ ७ ॥ सितासिते यत्र तरंगचामरे नद्यौ विभाते मुनिभानुकन्यके ॥ नीलातपत्रं वट एव साक्षात्स तीर्थराजो जयति प्रयागः ॥ ८ ॥ सकामधर्मार्थविशेषगुंफिता वेणीव सेयं किल मोक्षलक्ष्म्याः ॥ तत्प्रांतभागे वट एव राजते सुगुंफवत्पट्टनबद्धचित्रः ॥ ९ ॥ वैकुंठकैलासगतो हरीशयोरुपासकानामतिदूरभावात् ॥ सुखेन गंतुं विहिता विधात्रा वेणी मुनिश्रेणिरिवेह लक्ष्यते ॥ १० ॥ श्रीमाधवोसौ मुनिवर्यसंघैः संसेव्यमानो नितरां सुरैरपि ॥ अन्यत्र कुत्रास्य भवेन्न दर्शनं क्षोत्र प्रयासेन विनैव दृश्यते ॥ ११॥ कुत्रापि येषां सुलभं न दर्शनं सर्वेपि तेत्रानुचरंति मर्त्यवत् ॥ तं पश्य राजन् सुकृतैकलभ्यं तीर्थेशमिष्टं सुलभेष्टसिद्धिम् ॥ १२ ॥ इति संवर्ण्य बहुशो मार्कंडेयो महातपाः ॥ राजानं स्नापयामास विप्रैर्व्यासादिभिर्युतः ॥ १३ ॥ विधिना भ्रातृसहितं कृष्णादिस्त्रीयुतं प्रभुम् ॥ कृष्णेनानुगतं प्रीत्या वासुदेवेन सादरम् ॥ १४ ॥ ततः स राजा धर्मात्मा देवतैर्ऋषिभिः सह ॥ तर्पयामास विधिवत्स्वपितॄंश्च पितामहान् ॥ १५ ॥ दक्षिणाभिः सुसंतोष्य महादानानि भूरिशः ॥ १६ ॥ कृत्वा तत्र यथान्यायं दीनानाथांश्च भूरिशः ॥ भोजयामास शुद्धात्मा भक्त्या परमया युतः ॥ १७ ॥ गोभूसुवर्णरत्नानि गजाश्वप्रभृतीनि च ॥ अर्हत्तमेभ्यः संपूज्य बहुमानपुरःसरम् ॥ १८ ॥ तेवां विज्ञापयामास प्रीणपातपुरःसरम् ॥ अश्वमेधं क्रतुवरं कर्तुं

कृतमतिः स्वराद् ॥ १९॥ व्यासादीन्नारदादींश्च मार्कंडेयं महामुनिम् ॥ ततः कृष्णो महाबाहू राजानं संप्रहर्षयन् ॥ २० ॥ उवाच परमप्रीतः सर्वैस्तैर्मुनिभिः सह ॥ सहायमर्थसंपत्तिः प्रभुत्वं च यदीष्यते ॥ २१ ॥ सर्वं सान्निहितं तत्र यजस्व सुसमाहितः ॥ एवं सोनुमतः सर्वैः कृतसंभारसाधनः ॥ २२ ॥ अयजद्वाजिमेधेन यज्ञेशं पुरुषोत्तमम् ॥ प्रत्यक्षो यत्र भगवान् यज्ञानां फलदायकः ॥ २३ ॥ व्यासादयो विधानज्ञा दीक्षयांचक्रिरे नृपम् ॥ मार्कंडेयः स्वयं यत्र कारयामास कर्म तत् ॥ २४ ॥ एवं स तु महायज्ञो बह्वन्नो बहुदक्षिणः ॥ मुनिप्रसादात्संपूर्णः प्रयागं प्राप्य चाभवत् ॥ २५ ॥ ततस्ते मुनयः सर्वे तमनुज्ञाप्य हर्षिताः ॥ स्वाश्रमान् प्रति संजग्मुर्वासुदेवं प्रणम्य च ॥ २६ ॥ वासुदेवोपि भगवान् संपादितमनोरथः ॥ राजानं समनुज्ञाप्य द्वारकां प्रययौ ततः ॥ २७ ॥ सूत उवाच ॥ इत्थं स भगवान् राज्ञा मार्कंडेयो महातपाः ॥ शोकमज्ञानजं तस्य जातं ज्ञातिवधेन च ॥२८॥ पापसंशयमत्युग्रधैर्यच्युतिकरं महत् ॥ नीत्वा प्रयागं धर्मात्मा दूरीकृत्यसमाहितः ॥२९॥ विशुद्धमनसं चक्रे प्रयागस्य प्रभावतः ॥ इत्यंप्रभावस्तीर्थेषु प्रयागः स मुनिप्रियः ॥३०॥ इत्थं कथितं माहात्म्यं प्रभावश्चैव शौनक ॥ ब्रह्मणनन्दिना चैव यत्प्रोक्तं तत्समासतः ॥ ३१ ॥ समाख्यातं विस्तरतो वक्तुं कोर्हति सत्तम ॥ अल्पेनैव प्रयासेन पुरुषार्थचतुष्टयम् ॥ ३२ ॥ सुलभं यत्र संप्रोक्तं मुनिभिर्ब्रह्मवादिभिः ॥ ब्रह्मणा कपिलेनापि मार्कंडेयेन धीमता ॥ ३३ ॥ नारदेन कुमारेण प्रोक्तं पौराणिकं परम् ॥ इदं प्रयागमाहात्म्यं शृणोति श्रावयेच्च यः ॥ ३४ ॥ प्रयागस्नानजं सर्वं पुण्यमाप्नोति भक्तिमान् ॥ यज्ञैर्दानैस्तपोभिश्च व्रतैश्च नियमैरपि ॥३५॥ लभ्यते यत्फलं सम्यक् तदस्य श्रवणाद्भवेत् ॥ य एतच्छ्रावयाद्द्विजान् विष्णुभक्तिपरायणः ॥ ३६ ॥ तीर्थाभिगामी धर्मात्मा पूजयेत्तं प्रय-

त्तगान् ॥ वस्त्रालंकरणाद्यैश्च दक्षिणाभिः प्रतोषयेत् ॥ ३७ ॥ तस्मिन्संतोषिते विप्रे प्रपद्यंते मनोरथाः ॥ ३८ ॥ इति श्रीमत्स्यपुराणे प्रयागमाहात्म्ये द्वादशोऽध्यायः ॥ १२ ॥ समाप्तोऽयं ग्रंथः ॥

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मजगंगाविष्णोः अध्यक्ष "लक्ष्मीवेंकटेश्वर" मुद्रणालये मैनेजर पंडित-शिवदुलारे वाजपेयीत्यनेन स्वाम्यर्थं मुद्रयित्वा प्रकाशितम् । संवत् १९८१, शके १८४६ ।

पुस्तक मिलनेका ठिकाना-

गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस,
कल्याण-मुंबई.

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम् प्रेस,
खेतवाडी-मुंबई.

पुस्तकें मिलनेका ठिकाना–गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापाखाना, कल्याण–मुंबई.

# अत्रेयमभ्यर्थना.

अस्माकं मुद्रणालये वेद-वेदान्त-धर्मशास्त्र-प्रयोग-योग-सांख्य-ज्योतिष-पुराणेतिहास वैद्यक-मंत्र-स्तोत्र कोश-काव्य-चम्पू-नाटकालंकार संगीत-नीति-कथाग्रन्थाः, बहवः स्त्रीणां चोपयुक्ता ग्रन्थाः, बृहज्ज्योतिषार्णवनामा बहुविचित्रचित्रितोऽयमपूर्वग्रन्थः संस्कृतभाषया, हिन्दी-मारवाड्यन्यतरभाषाग्रन्थास्तत्तच्छास्त्राद्यर्थानुवादकाः, चित्राणि, पुस्तकमुद्रणोपयोगिन्यो यावत्यस्सामग्र्यः, स्वस्वलौकिकव्यवहारोपयोगि-चित्रचित्रितालिखितपत्रवत्पुस्तकानि च मुद्रयित्वा प्रकाश्यन्त सुलभेन मूल्येन विक्रयाय । येषां यत्राभिरुचिस्तत्तत्पुस्तकोपलब्धये एवं नव्यतया स्वस्वपुस्तकानि मुमुद्रयिषुभिः सुलभयोग्यमौल्येन सीसकाक्षरैः स्वच्छोत्तमोत्तमपत्रेषु मुद्रिततत्पुस्तकानां स्वस्वसमयानुसारेणो-पलब्धये च पत्रिकाद्वारा तैः प्रेरणीयोऽस्मि ।

गंगाविष्णु श्रीकृष्णदास, "लक्ष्मीवेंकटेश्वर" स्टीम्-मुद्रणयन्त्रालयाध्यक्ष, कल्याण मुंबई,

